# GOBHILA PARIÇIṢTA.

## FIRST PART.

New Series, No. 1222.

CONTAINING

SANDHYĀ-SŪTRA, SNĀNA-SŪTRA, SNĀNA-SŪTRA-PARIÇIṢTA,
ÇRĀDDHAKALPA, ÇRĀDDHAKALPA-PARIÇIṢTA
WITH BHĀṢYA.

BY

MAHĀMAHOPĀDHYĀYA CHANDRAKĀNTA TARKĀLANKĀRA.

*SECOND EDITION.*

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS
**No. 5, Nandakumar Chaudhury's 2nd Lane, Calcutta.**

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1909.

# गोभिलपरिशिष्टम् ।

## प्रथमभागरूपम् ।

सन्ध्यासूत्र-स्नानसूत्र-तत्परिशिष्ट-श्राद्धकल्प-तत्परिशिष्टात्मकम् ।

महामहोपाध्याय-

श्रीचन्द्रकान्ततर्कालङ्कारभट्टाचार्य्यकृतभाष्यसहितम् ।

तेनैव परिशोधितम् ।

श्राद्धकल्पभाष्ये क्वचित् क्वचित् परित्यक्तं परिवर्द्धितं परिवर्त्तितञ्च ।

( द्वितीयसंस्करणम् । )

श्रील श्री-

वङ्गदेशीयाख्यातिकसमाजानामनुमत्या व्ययेन च ।




कलिकाता-राजधान्यां

श्रीउमेन्द्रनाथचक्रवर्त्तिना

संस्कृतयन्त्रे मुद्रितम्

एसियाटीकसोसाइटीनामिकया सभया प्रकाशितञ्च ।

---

शकाब्दाः १८३१ ।

# अथ छन्दोगसन्ध्यासूत्रम्।

ॐ नमः सामवेदाय।

प्रणिपत्य परात्मानं देहपातैर्मुहुर्मुहुः।
छन्दोगसन्ध्यासूत्रस्य भाष्यमाभाष्यतेऽधुना॥

अथातः सन्ध्योपासनविधिं व्याख्यास्यामः॥ १॥

अथेत्ययं शब्दो ग्रन्थारम्भावद्योतकः। छन्दसि प्रणव इवार्षेयेषु ग्रन्थेष्वादावथशब्दः पठ्यते इति ह्युक्तं प्रातिशाख्ये कात्यायनेन। अथवा। अथशब्द आनन्तर्य्यार्थः श्रुत्या च मङ्गलप्रयोजनो भवति। उपनयनानन्तरं स्नानानन्तरं वेति तदर्थः। कृतोपनयनस्य सन्ध्यावन्दनेऽधिकारात्। स्नानमभिधाय,

"अत ऊर्द्धं प्रवक्ष्यामि सन्ध्योपासनिकं विधिम्।"

इति कर्म्मप्रदीपे स्नानानन्तरं तदुपदेशाच्च।

अतःशब्दो हेत्वर्थः। यस्मात् सन्ध्याहीनः कर्म्मणामनर्हः। यस्माच्च सन्ध्योपासनरहितो ब्राह्मण एव नोच्यते।

"अनर्हः कर्म्मणां विप्रः सन्ध्याहीनो यतः स्मृतः"।

इति।

"एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम्।
यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते" ॥

इति च कर्म्मप्रदीपोक्तेः। अत एतस्मात् कारणात्। सन्ध्योपासनस्य विधिं विधानमितिकर्त्तव्यतामित्येतत्। व्याख्यास्यामः विशेषेण कथयिष्यामः। अत्र च सन्ध्याशब्दस्तदुपासनकाले तावत् प्रयुज्यते।

"अहोरात्रस्य यः सन्धिः सूर्य्यनक्षत्रवर्ज्जितः।
सा च सन्ध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः" ॥

इति।

"ह्रासवृद्धी तु सततं दिनरात्रयोर्यथाक्रमम्।
सन्ध्या मुहूर्त्तमाख्याता ह्रासवृद्धौ समा स्मृता" ॥

इति चैवमादिस्मृतिषु। तथोपासनक्रियायाम्—

"उपास्ते सन्धिवेलायां निशाया दिवसस्य च।
तामेव सन्ध्यां तस्मात्तु प्रवदन्ति मनीषिणः" ॥

इति। "प्रातः सन्ध्यां ततः कृत्वा" इति चैवमादौ। एवमुपास्या देवताऽपि सन्ध्योच्यते। "अहरहः सन्ध्यामुपासीत" इति श्रुतेः।

"सन्धौ सन्ध्यामुपासीत नास्तगे नोद्गते रवौ"।

इति स्मृतेश्च। तदेवं यद्यपि सन्ध्याशब्दो नानार्थः, तथाप्यत्रो-पास्या देवतैव सन्ध्याशब्देन गृह्यते। कुतः? श्रुत्यनुगमात्। "अथेमां सन्ध्यां नोपास्ते" इत्याद्युपसंहारदर्शनात्। वक्ष्यमाण-षड्‌विंशब्राह्मणेऽपि तथैवाभिधानाच्च। सा खल्वियं सन्ध्याशब्दवाच्या देवता ब्रह्मैव। अतएव तैत्तिरीयाः समामनन्ति। "उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कुर्व्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते-

ऽसावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद"—इति। प्राणायामादिकं कुर्व्वन् आदित्यमभिध्यायन्नित्यर्थः। मञ्चाः क्रोशन्तीतिवदत्रादित्यशब्देनादित्यमण्डलमध्यवर्त्ती परमात्मा भण्यते। गायत्र्यर्थानुगमात्। स्थानेन स्थानिनोलक्षणाच्च। स्मरन्ति च।

"गवां सर्पिः शरीरस्थं न करोत्यङ्गपोषणम्।
निःसृतं कर्म्मसंयुक्तं पुनस्तासां तदौषधम्॥
एवं स हि शरीरस्थः सर्पिर्वत् परमेश्वरः।
विना चोपासनां देवो न करोति हितं नृषु॥
प्रणवव्याहृतिभ्याञ्च गायत्र्या त्रितयेन च।
उपास्यं परमं ब्रह्म आत्मा यत्र प्रतिष्ठितः"॥

इति।

"आदित्ये ब्रह्म इत्येषा निष्ठा ह्युपनिषत्स्वपि।
छान्दोग्ये बृहदारण्ये तैत्तिरीये तथैव च"॥

इति।

"आदित्यान्तर्गतं यच्च ज्योतिषां ज्योतिरुत्तमम्।
हृदये सर्व्वजन्तूनां जीवभूतः स तिष्ठति"॥

इति चैवमादि बहुलम्। सेयं सन्ध्यैव देवता गायत्रीरूपेणापि प्रतिष्ठितेति स्मर्य्यते।

"सा सन्ध्या सा तु गायत्री द्विधा भूत्वा प्रतिष्ठिता"।

इत्येवमादौ। तथा—

"न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह ।
सोऽहमस्मीत्युपासीत विधिना येन केनचित् ।"

इति । "ॐकारो भगवान् विष्णुः" इत्यादिवद्वाच्यवाचकयोरभेदादित्यभिप्रायः । गायत्रीप्रतिपाद्यः सूर्य्यमण्डलान्तर्गतः परमेश्वरोऽहमस्मीति प्रत्यगात्मपरमात्मनोरभेदबुद्ध्योपासीतेत्यर्थः । तदस्या देवतायाः कालभेदेन नामभेदः स्मर्य्यते । यथा—

"गायत्री नाम पूर्व्वाह्णे सावित्री मध्यमे दिने ।
सरस्वती च सायाह्ने सैव सन्ध्या त्रिधा स्थिता ॥
प्रतिग्रहादन्नदोषात् पातकादुपपातकात् ।
गायत्री प्रोच्यते तस्माद्गायन्तं त्रायते यतः ॥
सवितृद्योतनात् सैव सावित्री परिकीर्त्तिता ।
जगतः प्रसवितृत्वात् वाग्रूपत्वात् सरस्वती" ॥

इति । सेयमेकैव देवता एकैव च गायत्री कालभेदेनोपाधिभेदेन च नामभेदेन निर्दिश्यते । उपासनन्तु तस्या अभिध्यानम् । पूर्व्वोक्ततैत्तिरीयश्रुतेः । केचित्तु—

"वाच्यः स ईश्वरः प्रोक्तो वाचकः प्रणवः स्मृतः ।
वाचकेऽपि च विज्ञाते वाच्य एव प्रसीदति" ॥

इति वचनादुपासनं प्रसादनमित्याहुः ॥ १ ॥

सुप्रक्षालितपाणिपादवदन उपविश्योपस्पृश्य ॥ २ ॥

पाणिपादवदनानां प्रक्षालनक्रमः पाठक्रमादुन्नेयः । उपस्पृश्य गृह्यसूत्रोक्तक्रमेणाचम्य । तत्र विशेषमाह छन्दोगपरिशिष्टम्—

"सव्ये पाणौ कुशान् कृत्वा कुर्य्यादाचमनक्रियाम्।
ह्रस्वाः प्रवरणीयाः स्युः कुशा दीर्घाश्च वर्हिषः॥
दर्भाः पवित्रमित्युक्तमतः सन्ध्यादिकर्म्मणि।
सव्यः सोपग्रहः कार्य्यो दक्षिणः सपवित्रकः"॥

इति॥ २॥

उपविश्येत्युक्तं, कुत्र कथमुपवेशनं कर्त्तव्यम्? तदभिधातुमाह,—

प्रागग्रेषु दर्भेषु प्राङ्मुख उदङ्मुखो वा बद्धशिखी यज्ञोपवीती॥ ३॥

प्रागग्रेष्वित्यादेरुपविश्य इति गतेन सम्बन्धः। बद्धा चासौ शिखा चेति बद्धशिखा। साऽस्यास्तीति बद्धशिखी। बद्धशिख-इत्यनेनैव सिद्धे बद्धशिखीतिनित्ययोगे मत्वर्थीयप्रयोगः शिखाबन्धनस्यावश्यकत्वप्रज्ञापनार्थः। तथाच छन्दोगपरिशिष्टम्—

"सदोपवीतिना भाव्यं सदा बद्धशिखेन तु।
विशिखोव्युपवीतश्च यत् करोति न तत् कृतम्"॥

इति। यज्ञोपवीती, "दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंऽशे प्रतिष्ठापयति दक्षिणं कक्षमन्ववलम्बं भवत्येवं यज्ञोपवीती भवति" इति श्रुत्युक्तप्रकारेणेत्यर्थः॥ ३॥

अथेदानीं प्राणायामं वक्तुमुपक्रमते—

तत ओंपूर्व्वा भूर्भुवःस्वर्महर्जनस्तपः सत्यमिति

**सप्त व्याहृतयः सप्रणवा गायत्र्यापोज्योतीरसोऽमृत-मिति शिरः ॥ ४ ॥**

तत इति विशिष्टमानन्तर्य्यं द्योतयति। वारिणा आत्मानं रक्षित्वा सोदकविन्दुभिः कुशैः शिरसो मार्ज्जनं कृत्वा प्राणायामं कुर्य्यात्। तथा च छन्दोगपरिशिष्टम्—

"रक्षयेद्वारिणात्मानं परिक्षिप्य समन्ततः।
शिरसो मार्ज्जनं कुर्य्यात् कुशैः सोदकविन्दुभिः" ॥

इति। एतदनन्तरं हि तत्र प्राणायामोऽभिहितः। अथवा। अत्रादितः मार्ज्जनानभिधानात् प्राणायामात् परतस्तदभिधानाच्च छन्दोगपरिशिष्टे चैतद्विपर्य्ययेणाभिधानात् उभयत्रैकरूपस्यैव मार्ज्जनस्योपदेशाच्च छन्दोगपरिशिष्टानुसारेण प्राणायामात् पुरतो-वा मार्ज्जनं, एतद्ग्रन्थानुसारेण परतो वेति युक्तमुत्पश्यामः। द्वयोरेव स्वशास्त्रत्वात्। शिष्टाचारस्य चोभयथोपलम्भात्। केचित् किल शिष्टाः प्राणायामात् पुरत एव, केचिच्च प्राणायामात् परत-एव मार्ज्जनं कुर्व्वतो दृश्यन्ते। अतएव माधवाचार्य्यप्रभृतिभिः प्राणायामात् परस्तादेव, सुबोधिनीकारादिभिश्च पुरस्तादेव तन्मार्ज्जनं लिखितम्। पुरस्तादुपरिष्टाच्चोभयत्र तु केनापि न लिखितम्।

सूत्रमिदानीं व्याख्यायते। प्रत्येकमोंपूर्व्वाः सप्त व्याहृतयः। सप्रणवा गायत्री। व्याहृतीनामादितः प्रणवोपदेशात् गायत्र्या-अप्यादितः प्रणवो बोद्धव्यः। अथैवं सप्रणवा इत्येतदवाच्यं ॐपूर्व्वा

इति वर्त्तते एव। उच्यते। सत्यमोंपूर्व्वा इति वर्त्तते। सप्रणवा इत्यनुक्तौ परतोऽप्योंपूर्व्वा इत्येव वर्त्तिष्यते। तथा च शिरसोऽन्ते प्रणवो न प्राप्नोति। अतस्तदुक्तम्। शिर इत्यत्र लिङ्गविपरिणामेन सप्रणवमित्यनुषञ्जनीयम्। शिरश्च सप्रणवमादावन्ते चेत्यर्थः। तथा च छन्दोगपरिशिष्टम्—

"भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः।
महर्ज्जनस्तपः सत्यं गायत्री च शिरस्तथा॥
आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरितिशिरः।
प्रतिप्रतीकं प्रणवमुच्चारयेदन्ते च शिरसः"॥

इति। अथैवं सप्रणवं शिर इत्येवोच्यतां किमिति सप्रणवा गायत्रीत्युच्यते। नैष दोषः। यतस्तथासति ॐपूर्व्वाः सप्तव्याहृतयः इति सामानाधिकरण्येन निर्द्देशादन्ते च सप्रणवं शिर इत्युपादानात् नास्त्येव गायत्र्याः सप्रणवत्वमित्यपि कदाचिदाशङ्का स्यात्। सा माभूदिति सप्रणवा गायत्रीत्युक्तमित्यदोषः॥ ४॥

सोऽयं मन्त्रगणः,—

**दशप्रणवसंयुक्तस्त्रिरभ्यस्तः पूरककुम्भकरेचकाख्यः प्राणायामः॥ ५॥**

ऋजुरक्षरार्थः। शिरसोऽन्तेऽपि प्रणवप्रज्ञापनार्थं दशप्रणवसंयुक्त इत्याह। पूरकादिस्वरूपमुक्तं स्मृत्यन्तरे—

"नासिकाकृष्ट उच्छ्वासो ध्मातुः पूरक उच्यते।
कुम्भको निश्चलश्वासो रेच्यमानस्तु रेचकः"॥

इति।

"पूरकः पूरणं वायोः कुम्भकः स्थापनं क्वचित्।
वहिर्निःसारणं तस्य रेचकः परिकीर्त्तितः"॥

इति च। तदत्र त्रिरभ्यस्तस्य मन्त्रगणस्य प्राणायामत्वमुक्तम्। तस्य कथं पूरककुम्भकरेचकाख्यता? प्राणः खल्ववस्थाविशेषात्तत्तदाख्योभवति। उच्यते। सत्यं प्राणस्यैवावस्थाविशेषात् पूरककुम्भकरेचकाख्यता मुख्या। तद्योगात्तु मन्त्रगणोऽपि पूरककुम्भकरेचकाख्यः कथ्यते। दण्डयोगात् दण्डः पुरुष इतिवत्। तस्मात् पूरककुम्भकरेचकयोगात् त्रिरभ्यस्तो मन्त्रगणोऽपि भवति पूरककुम्भकरेचकाख्यः। एवञ्च पूरकेण मन्त्रगणस्यैकोऽभ्यासः कुम्भकेनैकः रेचकेनैक इति सिध्यति। मनुरपि—

"सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते"।

इत्यायतप्राणस्त्रिः पठेदित्याह। अत्र पाठस्य प्राणायामत्वं पूर्व्वोक्तदिशाऽवसेयम्। अत्र चाभ्यस्तोमन्त्रगणस्तदभ्यासो वा प्राणायाम इत्युभयथाऽपि फलतो न विरोधः। यथा न्यायनये अर्थाभ्युपगमयोर्गुणप्रधानभावयोर्विवक्षातन्त्रत्वादर्थाभ्युपगमोऽभ्युपगम्यमानोवाऽर्थः सिद्धान्त इत्यविरोधोपपादनं, तद्वदत्राप्यवगन्तव्यम्। तदनेन सूत्रेण प्राणायामपदार्थः परिभाषितो नात्र प्राणायामस्य कर्त्तव्यतोच्यते। तथाविधवचनव्यक्तेरभावात्। उत्तरसूत्रे तदुपदेशाच्च। तथाच छन्दोगपरिशिष्टम्—

"एता एतां सहानेन तथैभिर्दशभिः सह।
त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते"॥

इति। प्राणायामः स उच्यते इत्यनेन नायं प्राणायामस्य कर्त्तव्यताविधिः किन्तु कोऽसौ प्राणायाम इत्यपेक्षायां स एव परिभाष्यते इत्युक्तम्। मनुनाऽप्येवमेवोक्तम्। याज्ञवल्क्यः,—

"स्नानमब्दैवतैर्मन्त्रैर्मार्ज्जनं प्राणसंयमः।
सूर्य्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः॥
गायत्रीं शिरसा सार्द्धं जपेद्व्याहृतिपूर्व्विकाम्।
दशप्रणवसंयुक्तां त्रिरयं प्राणसंयमः"॥

इति पूर्व्ववचनाभिहितं प्राणसंयममुत्तरवचनेन परिभाषितवान्। योगियाज्ञवल्क्यः—

"भूर्भुवः स्वर्महर्जनः तपः सत्यं तथैवच।
प्रत्योङ्कारसमायुक्तास्तथा तत्सवितुः परम्॥
ॐ आपोज्योतिरित्येतच्छिरः पश्चात् प्रयोजयेत्।
त्रिरावर्त्तनयोगात्तु प्राणायामस्तु शब्दितः"॥

इति। प्राणायामः प्रकीर्त्तित इति पाठान्तरम्। सोऽयं प्राणायामः परिभाषितः। विनियोगस्त्वस्य उत्तरसूत्रे वच्यते। केचित्तु अर्थवादानां विधिशेषतयैव प्रामाण्यात् तदर्थं कर्त्तव्यपदमत्राध्याहार्य्यम्। तथाच प्राणायामः कर्त्तव्य इत्येकवचनसंयोगात् एकः प्राणायाम आवश्यकः। उत्तरसूत्रोपात्ता संख्या तु फलातिशयार्था, इत्याहुः। तदसङ्गतम्। स्वर्गादिबोधकार्थवादवाक्यस्येव उत्तरसूत्रोपात्तविधिशेषतयैवास्य प्रामाण्यसम्भवे कर्त्तव्यपदा-

ध्याहारे प्रमाणाभावात्। तथात्वेऽपि अत्रैककवचनसंयोगेऽपि, उत्तरसूत्रे संख्याविशेषोपादानात् अष्टका रात्रिदेवता इतिवत् एकत्वसंख्याया अविवक्षितत्वोपपत्तेश्च। वाक्यभेदश्चैवमापद्येत। कथम्? प्राणायामः कर्त्तव्यः स चैवंरूप इत्यर्थभेदात्। सर्व्वैरेव मुनिभिः संज्ञापरतया निर्द्देशेन च विधिपरत्वं वचनस्य नैवोपपद्यते। अधिकमुत्तरसूत्रे वक्ष्यामः॥ ५॥

एवं त्रीन् कृत्वा सप्त वा षोड़श वाऽऽचामेत्॥६॥

एवमा प्राणायामः परामृश्यते। प्राणायामो व्याख्यातः। त्रीन् प्राणायामान् कृत्वा। एवं त्रिः कृत्वेति पाठान्तरम्। तत्रापि तथैवार्थः। सप्त वा षोड़श वा प्राणायामान् कृत्वा आचमनं कुर्य्यात्।

तदत्र त्रीन् कृत्वेत्यत्र वाशब्दानुपादानात् सप्त वा षोड़श वेत्युत्तरत्र प्रत्येकं वाशब्दोपादानाच्च त्रयः प्राणायामा अवश्यं कर्त्तव्याः, उत्तरपक्षयोस्तु विकल्प इति प्रतीयते। तथाच,

"एकाक्षरं परं ब्रह्म प्राणायामाः परं तपः"।

इति मनुवचनव्याख्याने प्राणायामा इति बहुवचननिर्द्देशात् त्रयोऽवश्यं कर्त्तव्या इत्युक्तमिति कुल्लूकभट्टः। तथा मदनपारिजाते मनुरेवाह—

"प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत् कृताः।
व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमं तपः।
प्राणायामत्रयं कार्य्यं सन्ध्यासु च तिसृष्वपि"॥

इति। त्रयोऽपीत्यपिकारेण जघन्योऽयं पक्षः नातोन्यूनः पक्षोऽस्तीत्युक्तम्। अत्रिः—

"कर्म्मणा मनसा वाचा यदह्ना कुरुते त्वघम्।
आसीनः पश्चिमां सन्ध्यां प्राणायामैस्तु शुध्यति"॥

इति। वशिष्ठः—

"कर्म्मणा मनसा वाचा यदह्ना कृतमेनसः।
आसीनः पश्चिमां सन्ध्यां प्राणायामैर्व्यपोहति॥
कर्म्मणा मनसा वाचा यद्रात्र्या कृतमेनसः।
उत्तिष्ठन् पूर्व्वसन्ध्यायां प्राणायामैर्व्यपोहति"॥

इति। कौर्म्मे—

"प्राक्कूलेषु ततः स्थित्वा दर्भेषु च समाहितः।
प्राणायामत्रयं कृत्वा ध्यायेत् सन्ध्यामिति श्रुतिः"॥

इति। व्यासः—

"आदानं रोधमुत्सर्गं वायोस्त्रिःस्त्रिः समभ्यसेत्।
ब्रह्माणं केशवं शम्भुं ध्यायेद्देवाननुक्रमात्"॥

इति। यत्तु—

"त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते"।

इति छन्दोगपरिशिष्टवचने त्रिर्जपमात्राभिधानात् अत्र त्रिस्त्रिरिति वीप्सा सन्ध्यात्रयापेक्षया इति तत्त्वकृद्भिर्व्याख्यातं, तदुक्तवचनजातानवलोकनेन। पूर्व्वलिखिततद्धृतकूर्म्मपुराणवचनविरोधश्च तस्यावर्ज्जनीयः स्यात्। किञ्च छन्दोगपरिशिष्टवचने, न प्राणायामो विधीयते। किन्तु परिभाष्यते। अत्र तु स विधीयते

इति कस्य केनाभिसम्बन्धः। प्राणायामत्रयस्य कर्त्तव्यताबोधकानि सन्त्यन्यान्यपि बहूनि वचनानि। ग्रन्थगौरवभयान्न लिखितानि।

बृहस्पतिः—

"बध्वाऽऽसनं नियम्यासून् स्मृत्वा ऋष्यादिकं तथा।
संनिमीलितदृङ्मौनी प्राणायामं समाचरेत्"॥

इति। व्यासः—

"अङ्गुष्ठेन पुटं ग्राह्यं नासाया दक्षिणं पुनः।
कनिष्ठानामिकाभ्यान्तु वामं प्राणस्य संग्रहे॥
अङ्गुष्ठतर्ज्जनीभ्यान्तु ऋग्वेदी, सामगायनः।
अङ्गुष्ठानामिकाभ्यान्तु, ग्राह्यः सर्व्वैरथर्व्वभिः"॥

इति। योगियाज्ञवल्क्यः—

"प्राणस्यायमनं कृत्वा आचामेत् प्रयतोऽपि सन्।
अन्तरं क्षियते यस्मात्तस्मादाचमनं स्मृतम्"॥

इति। आचमने तु मन्त्रविशेषो नोपदिष्टः। शिष्टास्तु—

"सायमग्निश्च मेत्युक्त्वा प्रातः सूर्य्येत्यपः पिबेत्।
आपः पुनन्तु मध्याह्ने ततश्चाचमनं चरेत्"॥

इति भरद्वाजवचनात् तत्तन्मन्त्रैराचमनं कुर्व्वन्ति। शौनकस्याप्येताडृग्वचनम्। किन्तु तत्र, तत इत्यत्र एतैरिति विशेषः॥ ६॥

## ततो मार्ज्जनम्॥ ७॥

कुर्य्यादिति सूत्रशेषः॥ ७॥

मार्ज्जनमन्त्रानाह—

प्रणवेन महाव्याहृतिभिस्तिसृभिर्गायत्र्याऽऽपोहिष्ठाभिस्तिसृभिः ॥ ८ ॥

सप्तानां महाव्याहृतीनां पूर्व्वमुक्तत्वात् परतमानां चतुर्णां व्यवच्छेदार्थं तिसृभिरिति महाव्याहृतिविशेषणम्। तिस्रो हि व्याहृतयो भूराद्या एव प्रसिद्धाः। तथाचोक्तम्—

"भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः"।

इति। आपोहिष्ठाभिरापोहिष्ठादिभिः। तथाच च्छन्दोगपरिशिष्टम्—

"शिरसो मार्ज्जनं कुर्य्यात् कुशैः सोदकविन्दुभिः।
प्रणवो भूर्भुवः स्वश्च सावित्री च तृतीयिका।
अब्दैवत्यं तृचश्चैव चतुर्थमिति मार्ज्जनम्"॥

इति। हारीतस्त्वाह। "मार्जनार्च्चनवलिकर्म्मभोजनानि दैवतीर्थेन कुर्य्यात्" इति। मार्जनन्त्वस्माकं प्रणवेनैकं, तिसृभिर्महाव्याहृतिभिरेकं, गायत्र्यैकं, आपोहिष्ठादित्यृचेन चैकमिति बोद्धव्यम्। कुतः? भेदेन निर्देशात्तथाऽवगतेः। छन्दोगपरिशिष्टे सावित्र्यास्तृतीयत्वस्याब्दैवत्यत्यृचस्य चतुर्थत्वस्याभिधानाच्चैतदेवं प्रतिपत्तव्यम्। अतएव—

"ऋगन्ते मार्जनं कुर्य्यात् पादान्ते वा समाहितः।
आपोहिष्ठा-तृचा कार्य्यं मार्ज्जनन्तु कुशोदकैः॥

प्रतिप्रणवसंयुक्तं क्षिपेन् मूर्द्ध्नि पदे पदे।
तृचस्यान्तेऽथवा कार्य्यमृषीणां मतमीदृशम्" ॥

इति। तृचस्यान्ते इत्यस्मच्छाखिविषयम् ॥ ८ ॥

**अथोदकं हस्ते कृत्वा तत्र नासिकामवधायायतासुरनायतासुर्वा जपेदृतञ्च सत्यञ्चेति ॥ ९ ॥**

अथानन्तरमुदकं दक्षहस्ते कृत्वा। दक्षहस्ते इति कुतो वर्ण्यते ?

"यत्रोपदिश्यते कर्म्म कर्त्तुरङ्गं न चोच्यते।
दक्षिणस्तत्र विज्ञेयः कर्म्मणां पारगः करः" ॥

इति कर्म्मप्रदीपदर्शनात्। तत्र तस्मिन्नुदके नासिकामवधायासज्य आयतासुर्नियमितप्राणः अनायतासुरनियमितप्राणो वा एकवारं वारत्रयं वा ऋतञ्च सत्यञ्चेति तृचमघमर्षणसूक्तापरपर्य्यायं जपेत्। तृचमिति कुतो व्याख्यायते ? "तृचसूक्तानामादिग्रहणेन विधिरनादेशे" इति सूत्रकारवचनात्। अतएव छन्दोगपरिशिष्टम्—

"करेणोद्धृत्य सलिलं घ्राणमासज्य तत्र च।
जपेदनायतासुर्व्वा त्रिः सकृद्वाऽघमर्षणम्" ॥

इति। कृतार्थस्योदकस्य भूमौ परित्यागोऽर्थप्राप्त इति कृत्वा न सूत्रितः। स्मरन्ति च—

"जलपूर्णं तथा हस्तं नासिकाग्रे समर्पयेत्।
ऋतञ्चेति पठित्वा तु तज्जलन्तु क्षितौ क्षिपेत्" ॥

इति ॥ ९ ॥

त्रीनुदकाञ्जलीनादित्यं प्रति क्षिपेत् सावित्र्या ॥१०॥

त्रीनुदकाञ्जलीनादित्याभिमुखो भूत्वा सावित्र्या क्षिपेत् । उदकपूरितोऽञ्जलिरुदकाञ्जलिः । यद्यपि तौ युतावञ्जलिः पुमान् इत्यभिधानकाण्डे पाठात् विन्यासविशेषविशिष्टौ हस्तावेवाञ्जलिः तस्य च क्षेपो न सम्भवति । तथापि "सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे" इति न्यायेनाञ्जलिस्थोदकस्यैव क्षेपः। विशेषणीभूतस्योदकस्य क्षेपेण तद्विशिष्टस्याञ्जलेर्वा क्षेप उपचर्य्यते । शिखी विनष्ट इत्यादिवत् । अञ्जलेरुदकमिति वा वर्णनीयम् । अस्मिन् पक्षे व्यत्ययेन च्छान्दसं पुंस्त्वमास्थेयम् । अयञ्चोदकाञ्जलिक्षेप उत्थाय प्रणवव्याहृतियुक्तया गायत्र्या करणीयः । प्रणवव्याहृतिसाहित्येनैव गायत्र्याः सर्व्वत्र प्रयोगदर्शनात् । तथाच च्छन्दोगपरिशिष्टम्—

"उत्थायार्कं प्रति प्रोहेत् त्रिकेणाञ्जलिमम्भसः" ।

इति । त्रिकेण, 'सावित्री च तृतीयिका' इत्युक्तेः प्रणवव्याहृतिगायत्रीरूपेण । अञ्जलिमित्येकवचनं जात्यभिप्रायम् । सूत्रे अञ्जलित्रयक्षेपस्योक्तत्वात् । भवतु वा विकल्पः अञ्जलित्रयं वा एकं वा अञ्जलिं क्षिपेत् इति । तथा गायत्र्या वा त्रिकेण वा, इति । तत्त्वकारस्त्वाह—

"कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् ।  
आदित्याभिमुखस्तिष्ठन् त्रिरूर्द्ध्वः सन्ध्ययोः क्षिपेत् ।  
मध्याह्ने तु सकृदेवं क्षेपणीयं द्विजातिभिः" ॥

इति व्यासवचनाद्यवस्थितोऽयं विकल्पः सन्ध्ययोरञ्जलित्रयं क्षेपणीयं मध्याह्ने त्वेकोऽञ्जलिः इति। तच्चिन्त्यम्। सन्ध्यात्रयप्रक्रमे छन्दोगपरिशिष्टे तदभिधानात्—

"सन्ध्याद्वयेऽप्युपस्थानमेवमाहुर्मनीषिणः।
मध्ये त्वह्न उपस्थस्य विभ्राड़ादीच्छया जपेत्"॥

इति परतः सूर्य्योपस्थाने मध्याह्ने विशेषाभिधानेनात्र तदनभिधानेन चैतस्य सन्ध्यात्रयसाधारण्यावगतेः। व्यासवचनोक्ता व्यवस्था त्वन्येषां भविष्यति॥ १०॥

तत उपस्थानमुदुत्यं चित्रमिति॥ ११॥

तदनन्तरं उदुत्यं जातवेदसमिति चित्रं देवानामिति चैताभ्यामृग्भ्यामुपस्थानमाराधनं कुर्य्यात्। सूर्य्यस्येति शेषः। तत्र विशेषमाह च्छन्दोगपरिशिष्टम्—

"तदसंसक्तपार्ष्णिर्वा एकपादर्द्धपादपि।
कुर्य्यात् कृताञ्जलिर्वापि ऊर्द्ध्वबाहुरथापि वा।
यत्र स्यात् कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः।
भूयस्त्वं ब्रुवते तत्र कृच्छ्रात् श्रेयोह्यवाप्यते"॥

इति। तदत्र कृताञ्जलिरूर्द्ध्वबाहुर्व्वेति तुल्यवद्विकल्पाभिधानात्—

"सायं प्रातरुपस्थानं कुर्य्यात् प्राञ्जलिरानतः।
ऊर्द्ध्वबाहुस्तु मध्याह्ने तथा सूर्य्यस्य दर्शनात्"॥

इति हारीतवचनं गोभिलीयव्यतिरिक्तविषयम्। वस्तुतस्तु तथा

करणेऽपि गोभिलीयानां स्वशास्त्रोक्तविकल्पस्यानुपालनात् नास्ति काचिद् वस्तुक्षतिरित्यवधेयम्॥ ११॥

## ध्यानयुक्तमावर्त्तयेदोंपूर्व्वां गायत्रीम्॥ १२॥

ध्यानयुक्तमिति क्रियाविशेषणम्। ध्यानयुक्तं यथा भवति, तथा ॐपूर्व्वां गायत्रीमावर्त्तयेत् जपेत्। गायत्रीं ध्यात्वा जपेदित्यर्थः। ध्यानञ्च स्मृत्यन्तरेऽभिहितम्। यथा महाप्रयोगसारादौ।

"कुमारीमृग्वेदयुतां ब्रह्मरूपां विचिन्तयेत्।
हंसस्थितां कुशहस्तां सूर्य्यमण्डलसंस्थिताम्॥
मध्याह्ने विष्णुरूपाञ्च तार्क्ष्यस्थां पीतवाससीम्।
युवतीञ्च यजुर्व्वेदां सूर्य्यमण्डलसंस्थिताम्॥
सायाह्ने शिवरूपाञ्च वृद्धां वृषभवाहिनीम्।
सूर्य्यमण्डलमध्यस्थां सामवेदसमायुताम्"॥

इति। एतद्वैकल्पिकं ध्यानान्तरं स्मृत्यन्तरादवगन्तव्यम्। यद्यपि ॐपूर्व्वां गायत्रीमावर्त्तयेदित्युक्तं, तथापि व्याहृतिपूर्व्वामित्यपि बोद्धव्यम्। कुतः? तत्साहित्येनैवास्याः प्रयोगदर्शनात्। स्मरन्ति च।

"प्रणवव्याहृतियुतां गायत्रीं च जपेत्ततः।
समाहितमनास्तूष्णीं मनसा वापि चिन्तयेत्"॥

इति। तथाच च्छन्दोगपरिशिष्टम्—

"तिष्ठेदोदयनात् पूर्व्वां मध्यमामपि शक्तितः।
आसीतोडूद्गमाच्चान्त्यां सन्ध्यां पूर्व्वत्रिकं जपन्"॥

इति। पूर्व्वत्रिकं—

"प्रणवो भूर्भुवःस्वश्च गायत्री च तृतीयिका"।

इति पूर्व्वमुक्तं प्रणवव्याहृतिगायत्रीरूपम्। अथैवं ॐपूर्व्वामिति न वक्तव्यं, प्रणवव्याहृतिगायत्रीणां युगनद्धवाहित्वेन प्रयोगादेव तत्प्राप्तेः। अथोच्यते कारणं वक्तव्यम्। उच्यते। केचित् किल गायत्र्याः पूर्व्वतः परतश्च प्रणवं प्रयुञ्जते। यथाह योगियाज्ञवल्क्यः—

"ॐकारं पूर्व्वमुच्चार्य्य भूर्भुवःस्वस्ततः परम्।
गायत्री प्रणवश्चान्ते जप एवमुदाहृतः"॥

तदस्माकं न भवतीति प्रज्ञापनार्थमोंपूर्व्वामित्युक्तम्। कथं नाम? ॐकारपूर्व्वामेव न पुनरोङ्कारान्तामपीति। अतएव पूर्व्वत्रिकमित्युक्तं कात्यायनेन। यत्तु अन्ते प्रणवप्रयोगेऽपि प्रणवत्वेन द्वयोरैक्यात् पूर्व्वत्रिकमित्येतदविरुद्धमिति तत्त्वज्ञैरुक्तम्। तदसङ्गतम्। प्रणवत्वेन द्वयोरैक्येऽपि व्यक्तीनां चतुष्टापत्तेर्विरोधपरिहारस्यासम्भवात्। पूर्व्वमन्ते प्रणवस्यानभिधानेन पूर्व्वत्रिकमित्यनुपपत्तेश्च। यदपि हलायुधेनोक्तम्—

"ब्राह्मणः प्रणवं कुर्य्यादादावन्ते च सर्व्वदा।
स्रवत्यनोङ्कृतं पूर्व्वं परस्ताच्च विशीर्य्यति"॥

इति मनुवचनादादावन्ते च प्रणवप्रयोगः इति। तदपि न युक्तम्—

"अध्येष्यमाणन्तु गुरुर्नित्यकालमतन्द्रितः।
अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत्"॥

इत्यभिधाय तद्वचनाभिधानात्तस्य वेदाध्ययनविषयत्वादेतद्विषयत्वानुपपत्तेः। अन्यथा मन्त्रान्तराणामप्यन्ते प्रणवकरणापत्तेः। स्नानसूत्रपरिशिष्टे तु कल्पान्तरमुक्तम्। यथा—

"व्याहृतिभिः प्रतिप्रणवं गायत्रीं च प्रति प्रति।
षट्प्रणवसंयुक्तं गायत्रीजपलक्षणम्"॥

इति। तत्रापि अन्ते प्रणवो नोक्तः। तस्मात् स्वशास्त्रविरोधात् कौथुमादिभिरन्ते प्रणवो न कर्त्तव्यः। तथा हि कुर्व्वन् प्रमाणं सन्तमृषिमप्रमाणं कुर्य्यात्। तच्चानिष्टम्। तथाच गृह्यासंग्रहः—

"यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत्।
अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति"॥

इति। जपे विधिनिषेधौ स्मृत्यन्तरादवगन्तव्यौ। ग्रन्थगौरवभयादुपारम्यतेऽस्माभिः॥ १२॥

आवर्त्तयेदित्युक्तम्। कतिकृत्व आवर्त्तयेत्? तदुच्यते—

**अष्टकृत्व एकादशकृत्वो द्वादशकृत्वः पञ्चदशकृत्वः शतकृत्वः सहस्रकृत्वश्चेति॥ १३॥**

ऋजुरक्षरार्थः। चशब्दो विकल्पार्थः। कथं ज्ञायते? एकार्थत्वात्। "एकार्थास्तु विकल्पेरन्" इति हि तन्त्रस्थितिः। अत्र चोत्तरोत्तरकल्पेषु फलभूमा बोद्धव्यः। अन्यथा सम्भवति लघूपाये गुरूपायत्वेनाननुष्ठानलक्षणमप्रामाण्यमापद्येतोत्तरकल्पानाम्। तथाच फलवादं वक्ष्यति।

स्नानसूत्रपरिशिष्टे दशकृत्वोऽपि गायत्रीजप उक्तः। यथा—

"सहस्रपरमां देवीं शतमध्यां दशावराम्।
गायत्रीन्तु जपन् विप्रो न स पापेन लिप्यते"॥

तत् तु पापापनोदनार्थं भविष्यति। न स पापेन लिप्यते,—इत्युपसंहारात्। तत्र दशावरामित्युक्तत्वादत्र चाष्टकृत्वो जपोपदेशात्। तत्रैव—

"दशभिर्जन्मजनितं शतेन तु पुराकृतम्।
त्रियुगन्तु सहस्रेण गायत्री हन्ति दुष्कृतम्"॥

इत्यभिधाय तद्वचनाभिधानात्तथाऽवगतेश्च। अपिच तत्र षट्-प्रणवयुक्तगायत्रीजपस्योक्तत्वात् तद्विषयिण्येव तदुक्तदशसंख्येति न किञ्चिदनुचितम्॥ १३॥

पूर्व्वोक्तकल्पानां फलवादमाह—

**अष्टकृतः प्रयुज्य पृथिवीमभिजयत्येकादशकृत्वोऽन्तरीक्षं द्वादशकृत्वोदिवं पञ्चदशकृत्वः सर्व्वादिशोजयति शतकृत्वः सर्व्वान् सहस्रकृत्वो यत्किञ्चित् सर्व्वमिति॥ १४॥**

प्रयुज्य इत्युत्तरत्र सर्व्वत्रानुषञ्जनीयम्। पृथिवीमभिजयतीति पृथिवीस्थेषु भोग्यवस्तुष्वस्य कामचारो भवतीत्यर्थः। एवमुत्तरत्रापि। पृथिवीद्युलोकयोरन्तराले अन्तरीक्षलोकः। काम्यन्ते इति कामाः। सर्व्वान् कामान् पूर्व्वोक्तानाप्नोतीत्यर्थः। पूर्व्वोक्तानिति कथं ज्ञायते? "सर्व्वत्वमाधिकारिकम्"—इति सिद्धान्तात्। अथवा पूर्व्वोक्तव्यतिरिक्तमपि यत् किञ्चित् कमनीयमस्ति,

तत् सर्व्वमाप्नोति । "सर्व्वत्वमाधिकारिकम्" इति न्याया-दत्रापि पूर्व्वोक्तमेव सर्व्वमिति मा प्रज्ञाङ्क्षीदिति यत् किञ्चि-दित्युक्तम् ॥ १४ ॥

**अथ य इमां सन्ध्यां नोपास्ते नाचष्टे न स जयति ॥ १५ ॥**

अथेत्यधिकारानन्तर्य्यमाह । यः खल्वधिकारी इमां सन्ध्यां नोपास्ते पूर्व्वोक्तेन विधिना, न स जयति । नाचष्टे इत्यनेनैतदाह । यदु-पासनाऽशक्तौ सन्ध्योपासनविधेरध्ययनमपि कुर्व्वीत । तावताऽपि न प्रत्यवैतीत्यभिप्रायः । कुतः ?

"यं यं क्रतुमधीयीत तस्य तस्याप्नुयात् फलम्" ।

इत्यादिदर्शनात् । क्वचित्, नाचष्टे इति प्रतीकं नास्ति । एतदुप-संहारात् गायत्रीजपान्ता सन्ध्येति प्रतीयते । षड्‌विंशब्राह्मणे सन्ध्योपासनमेवमाम्नायते ।

"ब्रह्मवादिनो वदन्ति कस्माद्‌ब्राह्मणः सायमासीनः सन्ध्या-मुपास्ते कस्मात् प्रातस्तिष्ठन्, का वा सन्ध्या कश्च सन्ध्यायाः कालः किञ्च सन्ध्यायाः सन्ध्यात्वं, देवाश्च वा असुराश्चास्पर्द्धन्त तेऽसुरा-आदित्यमभिद्रवंस्त आदित्यो बिभेत्तस्य हृदयं कूर्म्मरूपेणातिष्ठत् स प्रजापतिमुपाधावत् तस्य प्रजापतिरेतद्भेषजमपश्यद्दतच्च सत्यञ्च ब्रह्म चोङ्कारश्च त्रिपदाञ्च गायत्रीं ब्रह्मणोमुखमपश्यत्तस्माद्‌ब्राह्म-णोऽहोरात्रस्य संयोगे सन्ध्यामुपास्ते सज्योतिष्याज्योतिषो दर्शनात् सोऽस्याः कालः सा सन्ध्या तत्सन्ध्यायाः सन्ध्यात्वं, यत् साय-मासीनः सन्ध्यामुपास्ते तया वीरस्थानं जयत्यथ यदपः प्रयुङ्क्ते

ताविप्रुषो वज्रीभवन्ति ताविप्रुषो वज्रीभूत्वाऽसुरानपाघ्नन्ति ततो-देवा अभवन् परासुरा भवन्त्यात्मना परास्य भ्रातृव्यो भवति य-एवं वेद, यत् सायञ्च प्रातश्च सन्ध्यामुपास्ते तया वीरस्थानꣳ स्थानञ्च सन्ततमविच्छिन्नं भवति य एवं वेद" ।

ये तूपासते श्रोत्रिया भवन्तीति ॥ १५ ॥

ये पुनरुपासते सन्ध्यां ते श्रोत्रिया भवन्तीति फलवादः । अत्र यच्छब्दोपादानात् तच्छब्द उपात्तप्राय इति स प्रतीयते । तथाच योगियाज्ञवल्क्यः—

"तच्छब्देन तु यच्छब्दो बोद्धव्यः सततं बुधैः ।
उदाहृते तु यच्छब्दे तच्छब्दः स्यादुदाहृतः" ।

इति ॥ १५ ॥

उपनीताश्छेदनभेदनभोजनमैथुनस्वप्नस्वाध्यायाना-चरन्ति ये सन्ध्याकाले, ते श्वशूकरशृगालगर्दभ-सर्पयोनिष्वभिसम्पद्यमानास्तमोऽभिसम्पद्यन्ते ॥१६॥

उपनीतानामेव सन्ध्योपासनेऽधिकारादुपनीता इत्याह । ये किलोपनीताः सन्ध्याकाले छेदनादीन्याचरन्ति न सन्ध्यामुपासते, ते श्वादियोनिषु जायमानास्तावद्भवन्ति ततोऽपि तमोऽभि-सम्पद्यन्ते। स्वप्नो निद्रा। स्वाध्यायो वेदाध्ययनम्। अतिरोहितार्थ-मन्यत् । सन्ध्याकाले सन्ध्योपासनं विहाय लौकिकं वैदिकं वा ऽन्यत् किमपि कर्म्म न करणीयम् । तदानीं कृतं वेदाध्ययन-मप्यनर्थाय भवति कैव कथाऽन्येषां कर्म्मणामित्यभिप्रायः ॥ १६॥

यस्मात् सन्ध्योपासने महानभ्युदयः विपर्य्यये कालातिपाते च महाननर्थः—

तस्मात् सायं प्रातः सन्ध्यामुपासीत ॥ १७ ॥

ऋज्वरक्षरार्थः। अत्र सायं प्रातरित्युपादानात् षड्विंशब्राह्मणेऽपि तथैव पठितत्वात् सायंप्रातर्होमवत् सन्ध्योपासनमपि कौथुमादीनां सायमुपक्रममेव प्रतीयते ॥ १७ ॥

अथेदानीं सन्ध्योपासनानन्तरं कश्चिज्जपोऽभिधीयते—

उदुत्यं चित्रमुद्वयं तमसस्परि भासं प्रागन्यदनुवर्त्तते उन्नयं गायत्र्यनुगानं प्रातः प्राङ्मुखस्तिष्ठन् जपेत् ॥१८

उदुत्यमित्यादयस्त्रयो मन्त्रप्रतीकाः। तत्रोदुत्यं चित्रमित्येतौ मन्त्रौ छन्दस्यार्च्चिके पठितौ सूर्य्योपस्थाने विनियुक्तावेव। उद्वयमित्ययं मन्त्रः छान्दोग्योपनिषदि पठ्यते। भासादयः सामविशेषाः। तत्र भासस्य बहुत्र गीयमानत्वेऽपि छन्दस्यार्च्चिके समाम्नातायां प्रत्नस्य वृष्णो अरुषस्य नूमह इत्यस्यामृचि गीयमानं यद्भासं नाम सामारण्यके पठ्यते तदेवाद्रियन्ते वृद्धाः। प्रागन्यदनुवर्त्तते इत्यनेन तत्संबन्धात्ताच्छब्द्यमिति न्यायात् तद्वाक्यसंबन्धात् उदुत्यं जातवेदसमित्यस्यामृचि आरण्यके गीयमानं आद्यमहोरात्रव्रतं नाम साम लक्ष्यते। उन्नयं नाम साम, उत्। नयामि। आदित्यम्। इत्यादिके स्तोभे आरण्यक एव गीयते। गायत्र्यामृचि यत् साम गीयते, तद्गायत्र्यनुगानम्। एतत् सर्व्वं प्रातः पूर्व्वाभिमुखस्तिष्ठन् दण्डवदूर्द्ध्वः सन् जपेत् ॥ १८ ॥

एषो उषा अपूर्व्व्या आवुन्दं वृहवा ददे ऋजु-नीतिनो वरुणः प्रत्यु अदर्श्यायत्युद्वेदभिश्रुता इव-मिति वर्गमस्तं गते शतशो धारा अवकीर्य्य गायत्र्यनु विसृज्य प्राङ्मुख उपविश्य जपेत् ॥ १६ ॥

गायत्रीजपादनन्तरं गायत्रीं विसृज्य प्राङ्मुख उपविश्य जपेत्। गायत्र्यनुविसृज्य इति छान्दसः प्रयोगः। सुपां सुलुगित्यादिना द्वितीयैकवचनस्य स्थाने सुर्व्वा। तथाच अनु जपानन्तरं गायत्रीं विसृज्येत्यर्थः। गायत्र्यनुविसृज्य इति केचित् न पठन्ति। पठन्ति च प्राङ्मुख इत्यत्र प्रत्यङ्मुख इति। कदा जपेत्? अस्तं गते। सूर्य्ये इति शेषः। सूर्य्यास्तगमनपर्य्यन्तकालस्य सन्ध्यो-पासनेनावरुद्धत्वात् तदानीं जपासम्भवादित्यभिप्रायः। किं कृत्वा जपेत्? शतशो धारा अवकीर्य्य। शतशब्दोबहुत्ववचनः। कस्मात्? नैघण्टुके काण्डे बहुनामसु पाठात्। बह्वीरुदकधारा-अवकीर्य्य विक्षिप्य। किं जपेत्?

एषो उषा अपूर्व्व्या इत्यादिवर्गं जपेत्। तत्र, एषो उषा अपूर्व्व्या इत्यादिका ऋक् छन्दस्यार्च्चिके द्वितीयप्रपाठके द्वितीयार्द्धे चतुर्थदशतेः चतुर्थी। आवुन्दं वृत्रहा ददे इत्यादिका तस्यैव तृतीयप्रपाठकस्य प्रथमार्द्धस्य तृतीयदशतेः तृतीया ऋक्। ऋजु नीतिनोवरुण इत्यादिका ऋक् तस्यामेव दशतौ पञ्चमी। प्रत्यु अदर्श्यायति इत्यादिका च तस्यैवार्च्चिकस्य चतुर्थप्रपाठकस्य प्रथमार्द्धे द्वितीयदशतौ प्रथमा ऋक्। उत्तरार्च्चिकस्य प्रथम-

प्रपाठकस्य द्वितीयार्द्धे चतुर्द्दशसूक्तस्य प्रगाथात्मकस्य प्रथमा च। उद्वेदभिश्रुता ह्वमित्यादिका तु तस्यैवार्च्चिकस्य द्वितीयप्रपाठकस्य प्रथमार्द्धस्य चतुर्थदशती प्रथमा ऋक्। उत्तरार्च्चिकस्य षष्ठ-प्रपाठकस्य तृतीयार्द्धगतद्वितीयसूक्तस्य प्रथमा च। वर्गमिति करणात् सर्व्वत्रैव दशतिसमाप्तिपर्य्यन्तं यथायथं सूक्तसमाप्ति-पर्य्यन्तं वा जपः करणीय इति प्रतिभाति।

एषो उषा अपूर्व्व्या इति प्रतीकं केचिन्न पठन्ति। तत्-स्थाने च केचिदत्र षोड़शाब्दमिति केचिच्च अन्तषोड़शाब्दमिति पठन्ति। उभयथा पाठेऽपि तत् पृथगेव सूत्रम्। तत्र तावदत्र षोड़शाब्दमिति पाठे अष्टवर्षोपनीतस्य ब्रह्मचारिणः षोड़श-वर्षपर्य्यन्तमयं जप इत्यर्थः। पाठान्तरेऽपि व्यत्यासेन प्रयोगात् षोड़शवर्षस्यान्तपर्य्यन्तमिति तथैवार्थः। तच्च सूत्रं पूर्व्वेण प्रात-र्जपेन परेण च सायं जपेन संबध्यते। मध्यपठितस्य विशेषा-भावात्। साहचर्य्यात् मध्यन्दिनजपेऽपि तथा॥ १९॥

## मध्यन्दिने विभ्राड़्बृहदासीनो जपेदासीनोजपेदिति॥२०

विभ्राड़् बृहदिति मन्त्रः छन्दस्यार्च्चिके पठ्यते। द्विर्वचनमिति करणच्च सन्ध्यासूत्रसमाप्तिं द्योतयति। केचिदेतत् सूत्रमन्यथा पठन्ति। मध्यन्दिने विभ्राड़् बृहद्वयमहाꣳ असीति वयमहाꣳ असीति इति। तत्पाठे तु प्राङ्मुख उपविश्य जपेदिति पूर्व्वसूत्रा-दनुवर्त्तनीयम्। वयमहाꣳ असीत्ययमपि मन्त्रः छन्दस्यार्च्चिके उत्तरार्च्चिके च पठ्यते।

स खल्वयं जपः सन्ध्योपासनात् परं करणीयः न सूर्य्योपस्थानकाले। प्रमाणाभावात्। सूर्य्योपस्थानमतिक्रम्य सन्ध्योपासनञ्चोपसंहृत्याभिधानात्। अस्तं गते सूर्य्ये सायं जपविधानात्। सायंप्रातःसन्ध्योपासनमभिधाय तद्वैपरीत्येन प्रातःसायंजपस्याभिधानाच्च। तथा कात्यायनः—

"उच्चित्रमृग्द्वयेनाथ उपतिष्ठेदनन्तरम्।
सन्ध्याद्वयेऽप्युपस्थानमेवमाहुर्मनीषिणः॥
मध्ये त्वह्न उपस्थाने विभ्राड़ादीच्छया जपेत्"॥

इति प्रातःसायमुपस्थानमुच्चित्रमृग्द्वयेन मध्याह्ने तु उपस्थाने विभ्राड़ादीनामिच्छया जपमाह। तदत्र मध्यन्दिने विभ्राड़् बृहदित्यस्य जपोऽपि सन्ध्योपासनात् परमेव न सूर्य्योपस्थानकाले। प्रातःसायंजपेन साहचर्य्यात्तथाऽवगतेः। कात्यायनेन उपस्थाने विभ्राड़ादीनां जपाभिधानात् अत्र तु विभ्राड़्बृहन्मन्त्रस्यैव जपोक्तेश्च तस्माद्वैलक्षण्यमस्यावगम्यते॥

विप्रेण चन्द्रकान्तेन तत्त्वसिद्धान्तवेदिना।
छन्दोगसन्ध्यासूत्रस्य भाष्यं काश्यां विनिर्मितम्॥
यः सर्व्वज्ञः सर्व्वशक्तिर्मामत्र विनियुक्तवान्।
प्रीयतां कर्म्मणैतेन स एव परमेश्वरः॥

इति सेरपुरनगरवास्तव्यवन्द्यघटीयमहामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मजब्रह्ममयीगर्भसम्भूतश्रीचन्द्रकान्ततर्कालङ्कारभट्टाचार्य्यकृतं छन्दोगसन्ध्यासूत्रभाष्यं समाप्तम्।

# छन्दोगस्नानसूत्रम् ।

## प्रथमा खण्डिका ।

विश्वेश्वरं नमस्कृत्य पितरौ च गुरूंस्तथा ।
छन्दोगस्नानसूत्रस्य भाष्यं वक्ष्ये समासतः ॥

**अथ स्नानविधिं व्याख्यास्यामः ॥ १ ॥**

अथेत्ययं निपात आर्षग्रन्थस्यादितः प्रयुज्यते ग्रन्थोपक्रमावद्योतकः । श्रुत्या च मङ्गलप्रयोजनो भवति । सन्ध्याग्रन्थानन्तर्य्यं वाऽभिधत्ते । तदनन्तरमेतस्याभिधानात् । स्नानं नाम सर्व्वाङ्गीणो जलसंयोगविशेषः । तस्य विधिं विधानमितिकर्त्तव्यतामिति यावत् । व्याख्यास्यामः विशेषेण विस्पष्टं वा सम्यक् कथयिष्यामः ॥ १ ॥

**नदीदेवखातगर्त्तप्रस्रवणादीन् गत्वा ॥ २ ॥**

स्नानार्थं नद्यादीनां मध्ये कञ्चित् जलाशयं गत्वा । नदीगर्त्तलक्षणमाह च्छन्दोगपरिशिष्टम् ।

"धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते ।
न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः" ॥

इति । देवखातमकृत्रिमखातजलाशयः । प्रस्रवणं निर्झरः ।

आदिशब्दः विलकृत्रिमजलाशयादिसंग्रहार्थः। नद्यादीन् जलाशयानिति जलाशयापेक्षया पुंसा निर्देशः। नदीं देवखातं गर्त्तप्रस्रवणादिकं स्नानार्थं गत्वा,—इति क्वचित् पाठः ॥ २ ॥

शुचौ देशे मृत्तिलकुशगोमयाक्षतानुपकल्प्य ॥ ३ ॥

जलाशयस्य तीरे शुचौ देशे मृदादिकमुपकल्प्य स्थापयित्वा। अक्षता यवाः। कुतः ?

"अक्षतास्तु यवाः प्रोक्ता भृष्टा धाना भवन्ति ते"।

इति वचनात्। प्रसिद्धमन्यत्। तत्तीरं जलेन प्रक्षाल्य तद्देशे मृत्तिकां कुशं गोमयं तिलानक्षतांश्चोपकल्पयेत्,—इति केचित् पठन्ति ॥३॥

पारक्यनिपाने पञ्च पिण्डानुद्धृत्य ॥ ४ ॥

निपीयतेऽस्मादिति निपानं जलाधारः। परकीयजलाशये यदि स्नायात्, तदा तस्मात् निपानात् पञ्च मृत्पिण्डानुद्धृत्य वहिः क्षिप्त्वा स्नातव्यम्। पिण्डोद्धरणस्यार्थवत्त्वार्थं तस्य वहिर्निःक्षेपोऽवगम्यते ॥ ४ ॥

नमस्कृत्य तीर्थं पावकानः सरस्वतीति ॥ ५ ॥

पावकानः सरस्वतीत्यनेन मन्त्रेण तीर्थं नमस्कृत्य वक्ष्यमाणं कुर्य्यात् ॥ ५ ॥

पादावारभ्य मृद्भिर्गात्राणि प्रक्षाल्योपविशेत् ॥ ६ ॥

मृदा प्रक्षालनायोगात् मृद्युक्ताभिरद्भिः पादावारभ्य शिरोऽन्तान्यङ्गानि प्रक्षाल्य उपविशेत्। मृद्भिरिति बहुवचनात् मृदां भागेन

बहुत्वसम्पादनं कार्य्यमिति प्रतीयते। मृदां त्रिधा करणं त्रिधा-कृतानां तासां पृथग्विनियोगश्च स्मृत्यन्तरेऽभिहितः। तद्यथा।

"मृत्तिकां तु त्रिधा कृत्वा भागेनैकेन लेपयेत्।
दक्षिणेनैव हस्तेन अष्टावेताननुक्रमात्॥
ललाटमंसौ हृत्पृष्ठमुदरं च सकुक्षिकम्।
ततो वामकरेणैव नाभिवस्त्युरुजङ्घकम्॥
दक्षिणादिक्रमेणैव चरणौ च त्रिभिस्त्रिभिः।
मृदा तृतीयभागेन करौ च त्रिः समार्जयेत्"॥

इति। अन्यत्रापि।

"गत्वोदकान्तं विधिवत् स्थापयेत्तत् पृथक् क्षितौ।
त्रिधा कृत्वा मृदं तान्तु गोमयं तद्विचक्षणः॥
अधमोत्तममध्यानामङ्गानां क्षालनन्तु तैः।
भागैः पृथक् पृथक् कुर्य्यात् क्षालने मृदसङ्करम्"॥

इति। वस्तुतस्त्वन्येषामेवैष विधिर्नास्माकम्। कथं ज्ञायते? एकत्र ललाटादिक्रमेणान्यत्राधमोत्तममध्यानामङ्गानां क्षाल-नोक्तेः। अस्मत्सूत्रकारेण च पादावारभ्याङ्गानां प्रक्षालनोप-देशात्। तस्मात् मृदः भागत्रयं कृत्वा एकेन भागेनेदानीं पादा-वारभ्याङ्गानि प्रक्षालनीयानि। अपरभागद्वयविनियोगः परतो-वक्ष्यते। अधममध्यमोत्तमाङ्गविनियोगार्थमेकैकं मृद्भागं पुनस्त्रिधा विभज्यते चेत्, नास्ति वस्तुक्षतिः। तदिदानीमङ्गानां प्रक्षालनं न स्नानार्थं किन्तु स्नानयोग्यतासम्पत्त्यर्थम्। कुतः? इदानीं देवताऽभिसन्धेरनभिधानात् परतश्च तदभिधानात्तथाऽवगतेः। अग्रे

स्नानयोग्यतासम्पत्त्यर्थानां शिखाबन्धनादीनामुपदेशाच्च। स्नानन्तु द्वितीयखण्डिकायां वक्ष्यते ॥ ६ ॥

कथमुपविशेत्? तदुच्यते।

**बद्धशिखो यज्ञोपवीती प्राङ्मुख उदङ्मुखो वा कुशहस्तः शुचिः समाहितः ॥ ७ ॥**

शुचिरस्पृश्यस्पर्शनादिरहितः। समाहितोऽविक्षिप्तचित्तः। अतिरोहितार्थमन्यत्। केचित्, बद्धशिखो नित्यं यज्ञोपवीत्याचम्य प्राङ्मुख इत्याद्यन्यथा सूत्रमिदं पठन्ति। तत्पाठे तु नित्यमिति पूर्व्वेण बद्धशिखोत्यनेन परेण च यज्ञोपवीतीत्यनेन संबध्यते। कुतः? मध्यपठितस्य विशेषाभावात्। तेन सर्व्वस्यामवस्थायामेतयोरावश्यकत्वं कुशहस्तत्वस्य तु नैवमित्यवगम्यते। आचम्येति वचनादिदानीमप्याचमनं कर्त्तव्यमिति च। परन्त्वनुपदमेवाचमनस्य वक्ष्यमाणत्वादिदानीमन्यदाचमनं न सुश्लिष्टमिति बहुषु पुस्तकेषु दृष्टः पूर्व्वएवपाठो मम समीचीनः प्रतिभाति। तदत्र भगवन्तोभूमिदेवाः प्रमाणम् ॥ ७ ॥

**अथ सप्त व्याहृतीः सावित्रीं च जप्त्वा ॥ ८ ॥**

अथ यथोक्तोपवेशनानन्तरम्। सप्त व्याहृतीः "भूर्भुवः स्वर्महर्जनस्तपः सत्यमिति सप्त व्याहृतयः"—इति सन्ध्यासूत्राद्युक्ताः। सप्तव्याहृतय इति पाठे च्छान्दसो व्यत्ययो द्रष्टव्यः। जप्त्वा इत्यत्र जपसंख्यानुपदेशात् सकृदेव जपः। यत्र हि संख्याविशेषोऽभि-

प्रेयते, तत्र स निर्दिश्यते । यथोत्तरसूत्रादौ । सकृज्जप्त्वा,—इत्येव केचित् पठन्ति ॥ ८ ॥

**सप्तकृत्वः साविच्याऽनुमन्त्रितं सकृदुदकमाचामेत् ॥९॥**

सप्तकृत्वः सावित्रीमुदकोपरि जप्त्वा तदनुमन्त्रितमुदकं सकृदाचामेत्, "चमु भक्षणे"—इति स्मरणात् सम्यग् भक्षयेत् । "हृद्गाभिः पूयते विप्रः"—इति ह्याचमने स्मरन्ति । अथ सकृदित्येतदवाच्यं, संख्याविशेषस्यानुपदेशादेव सकृदाचमनं भविष्यति । उच्यते । "त्रिराचामेत्"—इति गृह्यसूत्रे,—

"त्रिः प्राश्यापो द्विरुन्मृज्य मुखमेतानुपस्पृशेत्" ।

इति च्छन्दोगपरिशिष्टवचने, अन्यत्र च, सर्व्वत्रैवाचमने वारत्रयमब्भक्षणविधानात् सकृदित्यनुक्तौ वारत्रयमब्भक्षणमपि कश्चिदाशङ्कीत । सा माभूदिति सकृदित्युक्तम् । उत्तरसूत्रे यथाविधि इति करणादत्र परिमार्ज्जनादिकं नास्तीति प्रतीयते । त्रिराचामेदित्युपक्रम्य परिमार्ज्जनादिविधानात् सकृदाचमने न खल्वेतत् प्राप्नोति । सोऽयं सकृच्छब्दोऽमुमप्यर्थं सूचयति ॥ ९ ॥

**तत आचम्यापो यथाविध्याचम्यापो यथाविधि ॥१०॥**

ततः गायत्र्यनुमन्त्रितोदकपानानन्तरं यथाविधि गृह्योक्तप्रकारेणाप आचम्य । द्विर्वचनमादरार्थं स्नानयोग्यतासम्पादककर्म्मसमाप्त्यर्थञ्च । केचित् द्विर्वचनं न पठन्ति ॥ १० ॥

इति स्नानसूत्रभाष्ये प्रथमा खण्डिका ।

---

## द्वितीया खण्डिका।

अथ देवताऽभिसन्धिं कृत्वा ॥ १ ॥

अथ स्नानयोग्यतासम्पत्त्यनन्तरं, यस्या देवतायाः प्रीतये स्नानं कर्त्तव्यं तस्या देवताया अभिसन्धानं कृत्वा। अमुकदेवताप्रीतये स्नानं करिष्ये इति यथावत् सङ्कल्पेत्यर्थः। देवता चात्र परमेश्वर-एवेति शिष्टाः। अन्यासामपि देवतानां तदात्मकत्वादित्यभि-प्रायः। एष उ ह्येव सर्व्वे देवा इति श्रुतेः। देवानादेशे विष्णुरिति च स्मरन्ति। देवताध्यानं कृत्वा इति वाऽर्थः ॥ १ ॥

सहस्रशीर्षाघृतवत्यश्वक्रान्ताभिर्ऋग्भिर्मृत्तिकामा-दाय ॥ २ ॥

सहस्रशीर्षा इति घृतवतीति ऋचोः प्रतीकौ। अश्वक्रान्ताशब्देन तच्छब्दयोगात् अश्वक्रान्ते रथक्रान्ते इत्यादितैत्तिरीयशाखापरि-पठिता ऋगुच्यते। भवति हि तत्सम्बन्धात्ताच्छब्द्यम्। यथा दण्डयोगात् दण्डः पुरुष इति। अर्शआदित्वादच्प्रत्ययाश्रयणाद्वा तदर्थलाभः। अतिरोहितार्थमन्यत् ॥ २ ॥

इदं विष्णुर्विचक्रमे इति षडृचेन संमृज्य ॥ ३ ॥

इदं विष्णुर्विचक्रमे इति षडृचं सूक्तं उत्तरार्चिके पठ्यते। तत्र इदं विष्णुर्विचक्रमे इति प्रथमा। त्रीणि पदा विचक्रमे इति

द्वितीया। विष्णोः कर्म्माणि पश्यत इति तृतीया। तद्विष्णोः परमं पदमिति चतुर्थी। तद्विप्रासो विपन्यव इति पञ्चमी। अतो देवा अवन्तु न इति षष्ठी। आभिः ऋग्भिर्मृत्तिकां संमृज्य सम्यक् शोधयित्वा। मृज शुद्धौ इति स्मरणात्। मृदः शोधनञ्च जलसंयोगेन। अपां सर्व्वशोधकत्वात्॥ ३॥

उद्वयं तमसस्परि उदुत्तममिति चोर्द्ध्वौ पाणी कृत्वाऽऽदित्यमवेक्षेत॥ ४॥

ततो हस्तावूर्द्ध्वौ कृत्वा उद्वयमिति उदुत्तममिति चैताभ्यामृग्भ्या-मादित्यं पश्येत्॥ ४॥

उद्धृतासि वराहेणाश्मोसीति च प्रतिलोमान्यङ्गा-न्यभिमृशेरन्॥ ५॥

उद्धृतासीति अश्मोसीति चाभ्यामृग्भ्यां प्रतिलोमानि पूर्व्वं पादा-वारभ्येत्यभिधानात्तद्विपरीतक्रमेण शिरःप्रभृतीन्यङ्गानि अभिमृशे-रन् सर्व्वतोभावेन स्पृशेरन् पूर्व्वोक्तया संमृष्टया मृदा। तां मृदमङ्गेषु लिम्पेयुरित्यर्थः। उद्धृतासीति मन्त्रः तैत्तिरीयारण्यके, अश्मोसीति च मन्त्रब्राह्मणे पठ्यते॥ ५॥

द्विरेतयैवावृता कृत्वा॥ ६॥

एतयाऽनन्तरोक्तया आवृता इतिकर्त्तव्यतया। एवकारकरणात् मृत्तिकादानादिसमस्तैवावृत् द्विः कर्त्तव्येति दर्शयति। द्विवारद्वयं कृत्वा अङ्गेषु मृत्तिकालेपनमित्यर्थः। प्रथमेन सहैव द्वित्वम्॥ ६॥

गावश्चिद्घासमन्यव इत्येतेन गोमयं गात्रेषु मृत्तिकावत् ॥ ७ ॥

गावश्चिदित्येतेन मन्त्रेण गोमयं गात्रेषु लेपयेत्। मृत्तिकावदित्यनेन अत्रापि प्रतिलोमत्वमङ्गानाम्। द्विश्च लेपो गोमयस्य ॥७॥

ऋतञ्च सत्यञ्चेति त्रिः शुष्काघमर्षणं जपेत् ॥८॥

ऋतञ्च सत्यञ्चेत्यघमर्षणसूक्तं स्थले वारत्रयं जपेत्। स्थले यदघमर्षणसूक्तं जप्यते, तत् शुष्काघमर्षणमित्युच्यते।

"अपि चाप्सु निमज्जित्वा त्रिः पठेदघमर्षणम्"।

इत्येवमादौ हि जले तज्जपः प्रसिद्धः। अत्र तु स्थले जपार्थं शुष्काघमर्षणमित्युक्तम्। एतावत् पर्य्यन्तं स्थले कर्त्तव्यम् ॥ ८ ॥

ततो देवताऽभिसन्धिं कृत्वा ॥ ९ ॥

व्याख्यातप्रायमेतत्। तदिदं गोभिलीयानां स्नानद्वयम्। यदितः पूर्व्वं स्थले कर्त्तव्यमुक्तं तत् शुष्कस्नानमिति मृत्तिकास्नानमिति चाख्यायते। यदितः प्रभृति वक्ष्यमाणं तज्जलस्नानमिति वारुणस्नानमिति चोच्यते। तत्र पूर्व्वत्र स्नानशब्दो गौणः वारुणस्नानाधिकारसम्पत्त्यर्थः, परत्र मुख्य इत्यनुसन्धेयम्। अतएव स्नानस्य द्वित्वात् सङ्कल्पद्वयमविरुद्धम्। अथवा पूर्व्वमुक्तमिदानीं वक्ष्यमाणञ्चोभयं मिलित्वैकमेव स्नानम्। तस्यैव किञ्चित् स्थले किञ्चिच्च जले कर्त्तव्यम्। स्नानस्यैकत्वे चैकस्मिन् स्नाने सङ्कल्पद्वयायोगादत्र देवताभिसन्धिं कृत्वेत्यस्य जलाभिमानिनीं देवतां ध्यात्वेत्यर्थो वर्णनीयः ॥ ९ ॥

नाभिमात्रजले स्थित्वा ॥ १० ॥

नाभिपरिमितजले दण्डवदूर्द्ध: स्थित्वेत्यर्थ: ॥ १० ॥

शन्नोदेव्यापोहिष्ठीयाभि: पावमानीभिस्तरत्सम-न्दीभिरेतोन्विन्द्रं तमुष्टवाम नकि इन्द्र इत्याभि-र्ऋग्भि: पवित्रवतीभिर्मार्ज्जयित्वा ॥ ११ ॥

अत्र प्रतीकादिना मन्त्राणां निर्देश: । तत्र तावत् शन्नोदेवीर-भिष्टये इत्यादिर्मन्त्र: छन्दस्यार्च्चिके पठ्यते । आपोहिष्ठेति तृचात्मकं सूक्तमुत्तरार्च्चिके । तत्र आपोहिष्ठा मयो भुव इति प्रथमा । यो व: शिवतमोरस इति द्वितीया । तस्मा अरं गमाम व इति तृतीया ।

पावमानीभि: पावमानपर्व्वपठिताभि: । यद्यपि कपिञ्जल-न्यायेन बहुवचनस्य त्रित्वे पर्य्यवसानं, यद्यपि च छन्दस्यार्च्चिके पावमानपर्व्वपरिपठितास्तिस्र ऋच: ग्रहीतुं योग्या:, तथापि उत्तरार्च्चिकस्य प्रथमे खण्डे यदिदं पावमानं तृचं सूक्तत्रयं पठ्यते, तदेवाद्रियन्ते शिष्टा: । तत्र उपास्मै गायता नर इति प्रथमा । अभि ते मधुना पय इति द्वितीया । स न: पवस्व शं गवे इति तृतीया । दवि द्युतत्या रुचा इति चतुर्थी । हिन्वानो हेतुभिर्हित इति पञ्चमी । ऋधक् सोम स्वस्तये इति षष्ठी । पवमानस्य ते कवे इति सप्तमी । अच्छा कोशं मधुश्चुतं इत्यष्टमी । अच्छा समुद्रमिन्दव इति नवमी ।

तरत्समन्दीभिः तच्छब्दयुक्ताभिर्ऋग्भिः । तत्संबन्धात्ताच्छब्द्यम् । ताश्च चतस्रः ऋचः उत्तरार्च्चिके समाम्नायन्ते । तत्र, तरत्समन्दी धावति इति प्रथमा । उस्रा वेद वसूनां इति द्वितीया । ध्वस्रयोः पुरुषन्त्योः इति तृतीया । आययोस्त्रिꣳशतं तना इति चतुर्थी ।

एतोन्विन्द्रमित्यादि तृचात्मकं सूक्तमुत्तरार्च्चिके पठ्यते । एतोन्विन्द्रमित्यनेन तस्य परिग्रहः । कथं ज्ञायते ? तृचसूक्तानामादिग्रहणेन विधिरनादेशे इति सूत्रकारवचनात् । तत्र एतोन्विन्द्रꣳस्तवाम इति इति प्रथमा । इन्द्र शुद्धो न आगहि— इति द्वितीया । इन्द्र शुद्धो हि नोरयिं इति तृतीया ।

तमुष्टवाम यङ्गिर इत्युत्तर्च्चिके तृचसूक्तस्य तृतीयाया ऋचः प्रतीकम् । अतस्तन्मात्रस्यैवात्र ग्रहणम् । न कि इन्द्र त्वदुत्तरं इत्येषा छन्दस्यार्च्चिके पठ्यते ।

पवित्रवतीभिः पवित्रशब्दयुक्ताभिः ऋग्भिः । पवित्रन्ते इत्यादि तृचं सूक्तमुत्तरार्च्चिके पठ्यते । बहुवचनस्यार्थवत्त्वार्थं तस्यैव ऋक्त्रयस्य ग्रहणम् । यद्यपि तत्र द्वे ऋचौ पवित्रशब्दयुक्ते, तथापि स्रष्टीरुपदधातीति भूम्ना व्यपदेशस्य सिद्धान्तितत्वात् तिस्र एव ऋचः पवित्रवत्य उच्यन्ते । तत्र पवित्रन्ते विततं ब्रह्मणस्पते इति प्रथमा । तपोष्पवित्रं विततं दिवस्पदे इति द्वितीया । अरूरुचदुषसः पृश्निरग्रिय इति तृतीया । पवित्रवतीभिरित्यत्र चकारो लुप्तवत् द्रष्टव्यः । ऋज्वन्यत् । एतदनन्तरं, ॐ भूः पुनातु । ॐ भुवः पुनातु । ॐ स्वः पुनातु । ॐ भूर्भुवः स्वः पुनातु । इति समाचारात् मार्ज्जयन्ति ॥ ११ ॥

त्रिः प्राणायामं कृत्वा त्रिः प्लुत्य ॥ १२ ॥

गृह्यसूत्राद्युक्तरीत्या वारत्रयं प्राणायामं कृत्वा वारत्रयं निमज्य ॥१२॥

सहस्रशीर्षा इति तृचेनाघमर्षणं जपेत् ॥ १३ ॥

तृचेणेति च्छान्दसोऽयं प्रयोगः। धान्येन धनवामितिषद्‌भेदे तृतीया। सहस्रशीर्षा इति ऋक्‌त्रयाभिन्नमघमर्षणं जपेत्। ऋतञ्चेत्याद्यघमर्षणसूक्तजपो माभूदिति सहस्रशीर्षा इति तृचेणेत्याह। तत्र सहस्रशीर्षा पुरुष इति प्रथमा। त्रिपादूर्द्ध्व उदैत् पुरुष इति द्वितीया। पुरुषएवेदं सर्व्वमिति तृतीया। नेदं त्र्यृचं सूक्तं, येनादिग्रहणेन ऋक्‌त्रयग्रहणं स्यात्। किन्तु छन्दस्यार्च्चिके पठितानां सहस्रशीर्षा इत्यादीनां तिसृणामृचां ग्रहणार्थं सहस्रशीर्षा इति तृचेणेत्युक्तम्। जपश्चासां जलनिमग्ननासिकेन वायुं निरुध्य कर्त्तव्य इति साम्प्रदायिकाः। युक्तस्तु जलनिमग्नेन कर्त्तुम् ॥ १३ ॥

ततस्त्रिराप्लुत्य ॥ १४ ॥

ऋज्वर्थम् ॥ १४ ॥

पुनः शन्नोदेव्यादिभिर्मार्ज्जनञ्च मार्ज्जनञ्च ॥ १५ ॥

शन्नोदेव्यादिभिः पूर्व्वोक्ताभिर्ऋग्भिः पुनर्मार्ज्जनञ्च कर्त्तव्यमिति सूत्रशेषः। द्विर्व्वचनं स्नानविधिसमाप्त्यर्थम्। सोऽयं मध्याह्नस्नानविधिः। कथं ज्ञायते? सन्ध्याग्न्यानन्तरमेतस्याभिधानात् परतो ब्रह्मयज्ञोपदेशाच्च तथाऽवगतेः। अतएव,

"यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः" ।

इत्यनेन प्रातःस्नानेऽहःस्नानधर्म्मातिदेशः कात्यायनस्योपपद्यते । किन्त्वग्निमतामयं विस्तृतः स्नानविधिः प्रातःस्नाने न भवति । तथात्वे होमकालस्यात्ययापत्तेः । तदपि स एवाह ।

"अल्पत्वाद्धोमकालस्य बहुत्वात् स्नानकर्म्मणः ।
प्रातर्न तनुयात् स्नानं होमलोपो विगर्हितः" ॥

इति ॥ १५ ॥

इति स्नानसूत्रभाष्ये द्वितीया खण्डिका ।

---

## तृतीया खण्डिका ।

उक्तः स्नानविधिरथेदानीं स्नानाङ्गं तर्पणं वक्तव्यम् । अस्ति तावत् प्रधानं तर्पणं, पितृयज्ञस्तु तर्पणम्,—इत्यादिशास्त्रैरुक्तम् । अस्ति च स्नानाङ्गमपि तर्पणम् । कथं ज्ञायते ?

"नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते ।
तर्पणन्तु भवेत्तस्य अङ्गत्वेन व्यवस्थितम्" ॥

इति स्मरणात् । अग्रे चायमर्थः प्रवेदयिष्यते । अतस्तद्विवक्षया तावदुपक्रमते ।

### अथ नित्यवत् सन्ध्यामुपासीत ॥ १ ॥

अथ स्नानानन्तरं सन्ध्यामुपासीत । सन्ध्यासूत्रे सायंप्रातःसन्ध्योपासनं नित्यमित्युक्तम् । सायंप्रातःसन्ध्योपासनवत् मध्याह्नसन्ध्योपासनमपि नित्यमित्यर्थः । तथाच कात्यायनः ।

"एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम् ।
यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते" ॥

इति । नित्यवदित्यनेन सायंप्रातःसन्ध्योपासनयोः कृत्स्नविध्यतिदेशः ॥ १ ॥

तत्र मध्याह्नसन्ध्योपासने सूर्य्योपस्थाने विशेषमाह ।

उदुत्यं चित्रमायं गौरपत्ये तरणिरुद्यामेष्याभि-र्ऋग्भिः सवितुरुपस्थानम् ॥ २ ॥

उदुत्यमित्यादयः ऋचां प्रतीकाः। यद्यपि नित्यवत् सन्ध्या-मुपासीतेत्यतिदेशादेवोदुत्यं चित्रमिति ऋग्द्वयं प्राप्नोति इति तत्प्रतीककीर्त्तनमनर्थकम्। तथापि तदवचने आयं गौरित्यादि-कात् वैकृतात् विशेषोपदेशात् शरमयबर्हिषा कुशमयबर्हिर्वत् प्राकृतस्य ऋग्द्वयस्य निवृत्तिः स्यादिति तत्प्रतीकपरिकीर्त्तन-मित्यवगन्तव्यम्।

तत्र तावत् उदुत्यं चित्रमिति मन्त्रौ सायंप्रातःसन्ध्योपा-सनयोः सूर्य्योपस्थाने विनियुक्तावेव। आयं गौरित्युत्तरार्च्चिके तृचस्य सूक्तस्य प्रथमा। तृचसूक्तानामादिग्रहणेन विधिरनादेशे इति सूत्रकारवचनात् आयं गौरित्यनेन तदादिकस्य तृचसूक्तस्यैव ग्रहणम्। तत्र, आयं गौः पृश्निरक्रमीदिति प्रथमा। अन्तश्चरति रोचना इति द्वितीया। त्रिंशद्धाम विराजति इति तृतीया।

अपत्ये तायवो यथा इतीयमृक् च्छन्दस्यार्च्चिके पठ्यते। तरणिर्विश्वदर्शत इत्यादिकाऽपि तत्रैव पठ्यते। परिगृहीता चेयं शिष्टैः। उत्तरार्च्चिकेऽपि तरणिरित् सिषासति इति प्रगाथात्मके सूक्ते प्रथमा पठ्यते। न त्वियमत्र शिष्टैः परिगृह्यते। उद्यामेषि रजः पृथु इतीयमपि छन्दस्यार्च्चिक एव समाम्नायते।

साम्प्रदायिकास्तु अपत्ये तायवो यथा इत्यादि ऋग्द्वयं, तरणिर्विश्वदर्शत इत्यादि ऋक्त्रयं, उद्यामेषि रजः पृथु इत्यादि

ऋक्त्रयञ्चात्र परिगृह्णन्ति। उदुत्यं चित्रमित्यादिऋग्द्वय-पाठानन्तरं विभ्राड्बृहत् पिबतु सोम्यं मधु इत्यादिकामृचं पठित्वा चित्रं देवानामुदगादनीकं इतीमामपि ऋचं पुनः पठित्वा आयं गौरित्याद्याऋचः पठन्ति च। तेषामयमाशयः।

"उच्चित्रमृग्द्वयेनाथ उपतिष्ठेदनन्तरम्।
सन्ध्याद्वयेऽप्युपस्थानमेवमाहुर्मनीषिणः॥
मध्ये त्वह्न उपस्थाने विभ्राड़ादीच्छया जपेत्"।

इति कात्यायनेन मध्याह्नसन्ध्योपासने उदुत्यं चित्रमिति ऋग्द्वयेन सवितुरुपस्थानानन्तरं विभ्राड़ादीनां दशतिसमाप्तिपर्य्यन्तं तदर्व्वाग् वा इच्छया जपोऽभिहितः। तदनुरुन्धानैः साम्प्रदायिकैः दशतिसमाप्तिपर्य्यन्तं सर्व्वासामृचां संग्रहार्थं अपत्ये इत्यादौ यथायथमृक्द्वयमृग्त्रयञ्च परिगृह्यते। छन्दस्यार्च्चिके ह्यारण्यकाण्डे पञ्चमदशतौ ताः पर्व्वा ऋचः समाम्नायन्ते। तत्र विभ्राड्बृहदित्येषा द्वितीया ऋक्। चित्रं देवानामिति तृतीया। आयं गौरिति चतुर्थी। अन्तश्चरतीति पञ्चमी। त्रिंशद्धामेति षष्ठी। अपत्ये इति सप्तमी। अदृश्रन्नस्य केतव इत्यष्टमी। तरणिर्विश्वदर्शत इति नवमी। प्रत्यङ् देवानां विश इति दशमी। येना पावक चक्षसा इत्येकादशी। उद्यामेषीति द्वादशी। अयुक्त सप्त शुन्ध्युवः इति त्रयोदशी। सप्त त्वा हरितो रथे इति चतुर्दशी। ततो दशतिसमाप्तिः।

इदन्त्विह वक्तव्यम्। नित्यवत् सन्ध्यामुपासीतेत्युपक्रम्याभि-ऋग्भिः सवितुरुपस्थानमित्यभिधानात् फलसंयोगाद्यनभिधाना-

चासामृचां सवितुरुपस्थाने नित्यवत् संयोगोवगम्यते। कात्यायनेन त्विच्छया जपेदित्यभिधानात् विभ्राड़ादीनामनित्यसंयोगः। तत्कथमुभयोरेकार्थत्वं सम्भवति। नित्यानित्यसंयोगविरोधापत्तेः। एवमत्र विभ्राड़ादीनामनुपदेशात् अन्यत्र चोपदेशात् व्यक्तमनयोर्भिन्नार्थत्वम्।

कथं वा आयं गौरित्यादौ अनुल्लिखितप्रतीकानां द्वित्राणामृचामुपसंग्रहः शक्यते कर्त्तुम्। आभिरितीदमः सन्निहितवचनत्वात्। आदिग्रहणस्य च तन्मन्त्रमात्रग्रहणज्ञापनार्थत्वात्। तृचसूक्तानामेव परमादिग्रहणेन ग्रहणमुक्तम्। तथात्वे चाभिरृग्भिरिति वचनमत्यन्तमेव कदर्थितं स्यात्। न चैतदुचितम्। स्नानसूत्रपरिशिष्टपरिसमाप्तौ अथ मन्त्रा इत्युपक्रम्य एकैकमन्त्रप्रतीकानामेवोल्लेखः कृतः। छन्दोगाह्निकेऽपि आयं गौरित्यादिपरिकीर्त्तितप्रतीका एव ऋचोलिखिता न त्वन्याः। तस्मात् भिन्नाविमौ कल्पौ न त्वनयोरेकत्वम्। उदुत्यं चित्रमित्याभ्यामुपस्थाय इच्छया विभ्राड़ादीनां जप इति मतं कात्यायनस्य। अत्रभवतः सूत्रकारस्य तु मतं परिकीर्त्तितप्रतीकाभिरृग्भिः सवितुरुपस्थानमिति कस्य केनाभिसम्बन्धः। गोभिलीयानामुभयोरेव स्वशास्त्रोक्तत्वाद्विकल्पएवानायत्या प्रतिपत्तव्यो भवति॥२॥

नमो ब्रह्मणे इत्युपजाय चेत्यन्ते॥ ३॥

ऋग्भिरुपस्थानस्यान्ते नमो ब्रह्मणे इत्याद्युपजाय चेत्यन्तेन सवितुरुपस्थानमित्यनुवर्त्तते। तत्त्वकारादिभिरप्येवमेव वर्णितम्।

नमो ब्रह्मणे इत्युपजाय चेत्येवमन्तेन चेति सूत्रपाठे व्यक्तएवायमर्थः। एवमन्तेनेति चकाररहितपाठेऽपि सवितुरुपस्थानमित्यनुवर्त्तत एव। केचित्तु नमो ब्रह्मणे इत्यादिसूत्रस्य वक्ष्यमाणेन सूत्रेण सम्बन्धं कुर्व्वन्तस्तर्पणएवास्य विनियोगं मन्यन्ते। न त्वेतेन तर्पयन्ति। किन्तु तर्पणात् पूर्व्वं कृताञ्जलयो भूत्वा मन्त्रमिमं पठन्ति। मन्त्रश्चायं वंशब्राह्मणप्रारम्भ एव पठ्यते ॥ ३ ॥

अथेदानीं तर्पणमभिधीयते।

## अग्निस्तृप्यत्विति च तृप्यतां वा ॥ ४ ॥

इतिशब्दोगणस्य सूचकः। इत्यादिबहुवचनान्ताः गणस्य संसूचकाभवन्तीत्युक्तेः। चशब्दश्चानुक्तसमुच्चयार्थः। अतएवाग्रिमसूत्रे, एतानिति बहुवचनोपादानं सङ्गच्छते। अन्यथा अग्निमात्रस्यात्र तर्पणीयत्वे बहुवचनोपादानमसङ्गतं स्यात्। तत्र साम्प्रदायिकाः अग्न्यादिगणमित्थमाचक्षते। अग्निः। वषट्कारः। महाव्याहृतयः। गायत्री। ब्रह्मा। विष्णुः। वेदाः। देवाः। छन्दांसि। यज्ञाः। अध्ययनम्। द्यावापृथिव्यौ। अन्तरिक्षम्। अहोरात्राणि। मासाः। ऋतवः। संवत्सरः। वरुणः। समुद्राः। नद्यः। गिरयः। क्षेत्राणि। वनानि। ओषधयः। वनस्पतयः। पशवः। नागाः। उरगाः। सुपर्णाः। वयांसि। गावः। वसवः। रुद्राः। आदित्याः। मरुतः। सिद्धाः। साध्याः। गन्धर्व्वाः। पिशाचाः। यक्षाः। रक्षांसि। भूतानि। नक्षत्राणि। अश्विनौ। अप्सरसः। चतुर्विधभूतग्रामः। मरीचिः। अत्रिः। अङ्गिराः। पुलस्तिः। पुलहः।

क्रतुः। प्रचेताः। वशिष्ठः। भृगुः। नारदः। पुलस्तिरित्यत्र पुलस्त्य इति केचित् पठन्ति। सोऽयं सम्प्रदायागतोऽग्न्यादिगणः। अत्रान्ते यथायथं तृप्यतु इति, तृप्येतां इति, तृप्यन्तु इति वा प्रयोक्तव्यम्। सर्व्वत्रादौ प्रणवः प्रयोक्तव्यः। लिखिष्यमाणस्नान-सूत्रपरिशिष्टवचनात्। तृप्यतामिति पक्षेऽपि तथैव यथायथं परिणामः करणीयः। तृप्यतां वेति केचिन्न पठन्ति। स्नानसूत्र-परिशिष्टे तु तदप्युक्तम्। यथा।

"तृप्यतामिति सेक्तव्यं नाम्ना च प्रणवादिना"।

इति। अग्न्यादितर्पणानन्तरं, एवमादयः स्वस्ति कुर्व्वन्तु तर्पिताः स्वस्ति कुर्व्वन्तु तर्पिताः, इत्याशंसावाक्यं कृताञ्जलयः पठन्ति ॥४॥

## सर्व्वत्र सव्येनैतां स्तर्पयेत् ॥ ५ ॥

सर्व्वत्र तर्पणे। अपवादस्यानुपदमेव वक्ष्यमाणत्वात् सर्व्वत्र देवतर्पणे इत्यर्थः। सव्येनेति उपवीती भूत्वा दक्षिणं जानु भूमौ पातयित्वा देवतीर्थेनैतान् देवान् तर्पयेदित्यर्थः। तथाच च्छन्दोगपरिशिष्टम्।

"दक्षिणं पातयेज्जानु देवान् परिचरन् सदा।
पातयेदितरज्जानु पितॄन् परिचरन्नपि"॥

इति। देवतीर्थस्य देवकर्म्मार्थत्वन्तु प्रसिद्धमेव। गणस्य बुद्धौ सन्निहितत्वादेतानिति बहुवचननिर्देशः। अग्निमात्रतर्पणस्य पूर्व्व-मुक्तत्वे त्वेतदसङ्गतं स्यादित्युक्तमादावेव। केचित्तु पूर्व्वेण सूत्रेणा-स्यैकसूत्रतां कृत्वा किञ्चिच्चान्यथाकृत्य, अग्निस्तृप्यत्विति च देवांस्तर्पयेयुरिति पठन्ति ॥ ५ ॥

## अथापसव्येन ॥ ६ ॥

अथानन्तरमपसव्येनेति प्राचीनावीती भूत्वा पातितवामजानुः पितृतीर्थेन तर्पयेदित्यनुवर्त्तते। अपसव्यशब्दः पितृतीर्थमप्यभिधत्ते। तथाच गृह्यान्तरम्। "तर्ज्जन्यङ्गुष्ठयोरन्तरा अवसलवि अपसव्यं वा तेन पितृभ्यो ददाति" इति ॥ ६ ॥

## राणायनिशटीति ॥ ७ ॥

राणायनिश्च शटिश्च राणायनिशटी। इतिशब्दोगणलक्षणार्थः प्रत्येकं संबध्यते। सन्धिश्छान्दसः। राणायनिगणं शटिगणञ्चापसव्येन तर्पयेदित्यर्थः। तत्र राणायनिगणे त्रयोदश सामगाचार्य्या भवन्ति। शटिगणे च दश प्रवचनकर्त्तारः। राणायनिगणस्तावत्। राणायनिः। सात्यमुग्रिः। व्यासः। भागुरिः। और्गुण्डिः। गौग्गुलविः। भानुमानौपमन्यवः। कराटिः। मशकोगार्ग्यः। वार्षगण्यः। कौथुमिः। शालिहोत्रिः। जैमिनिः। एतेषां तर्पणान्ते, त्रयोदशैते सामगाचार्य्याः स्वस्ति कुर्व्वन्तु तर्पिताः स्वस्ति कुर्व्वन्तु तर्पिताः, इत्याशंसावाक्यं पठन्ति। द्विगुणभुग्नकुशैः कृष्णतिलैरञ्जलित्रयदानेन चैतांस्तर्पयन्ति। एवमग्रेऽपि। शटिगणः खल्वपि। शटिः। भाल्लविः। काल्लविः। ताण्ड्यः। वृषाणः। शमबाहुः। रुरुकिः। अगस्त्यः। वष्कशिराः। हूहूः। एतेषां तर्पणानन्तरं, दशैते प्रवचनकर्त्तारः स्वस्ति कुर्व्वन्तु तर्पिताः स्वस्ति कुर्व्वन्तु तर्पिताः, इत्याशंसावाक्यपाठः शिष्टाचारागतः ॥ ७ ॥

अथ कव्यबालादयोदिव्या यमाश्च ॥ ८ ॥

अथानन्तरं कव्यबालादयो दिव्याः पितरो यमाश्च तर्पणीया-इत्यर्थः । व्यत्ययाद्वा द्वितीयार्थे प्रथमा । कव्यबालादीन् दिव्यान् पितॄन् यमांश्च तर्पयेदिति वर्त्तते । कव्यबालादय इत्यादिशब्दो-नलादिसंग्रहार्थः । यमा इति बहुवचनं गणलक्षणार्थम् । कव्य-बालादयस्तावत् । कव्यबालः । नलः । सोमः । यमः । अर्य्यमा । अग्निष्वात्ताः । सोमपीथाः । वर्हिषदः । यमाः खल्वपि । यमः । धर्म्मराजः । मृत्युः । अन्तकः । वैवस्वतः । कालः । सर्व्वभूतक्षयः । औदुम्बरः । दध्नः । नीलः । परमेष्ठी । वृकोदरः । चित्रः । चित्रगुप्तः ।

अथापसव्येन इत्युपक्रम्यैतदभिधानात् यमतर्पणमपि गोभि-लीयानामपसव्येनैव कर्त्तव्यम् ।

"दक्षिणाभिमुखो भूत्वा तिलैः सव्यं समाहितः ।
देवतीर्थेन देवत्वात् तिलैः प्रेताधिपो यतः" ॥

इति स्कन्दपुराणीयं गोभिलीयव्यतिरिक्तविषयम् । अन्यथा तेषां स्वशास्त्रोपरोधापत्तेः ॥ ८ ॥

अथात्मीयाꣳस्त्रीन् पितृतस्त्रीन् मातृतो माता-महाꣳश्च तत्पत्नीश्चेति पितृतर्पणम् ॥ ९ ॥

अथानन्तरमात्मीयांस्तर्पयेत् । आत्मीयानेवाह त्रीनिति । पितृतस्त्रीन् पितृपितामहप्रपितामहान् । मातृतस्त्रीन् मातृ-

पितामहीप्रपितामह्यौः । त्रीन् मातृत इति आत्मीयाभिसम्बन्धात् पुंसा निर्देशः । मातृतस्त्रीनात्मीयानित्यर्थः । “तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्धः” इति च्छान्दोग्योपनिषत्श्रुतिव्याख्याने “उभयग्रहणमविवक्षितं यस्योभयं हविरार्त्तिमार्च्छतीति यद्वत्”—इति शङ्कराचार्य्यचरणोक्तवदत्रापि त्रीन् मातृत इति पुंलिङ्गस्याविवक्षितत्वोपपत्तेश्च । मातामहा-नित्यत्रापि त्रीनित्यनुषज्यते । त्रीन् मातामहान् मातामह-प्रमातामहवृद्धप्रमातामहानित्यर्थः । त्रीनित्यनुषङ्गात् माता-महानिति बहुवचननिर्देशात्

“मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः” ।

इति दर्शनाच्च मातामहपदं तदादित्रिकपरम् । ते खल्वमी त्रयोऽपि मातामहा एव । तत्राद्यो निरुपपदः परौ तु सोपपदा-वित्येतावान् परं विशेषः । तत्पत्नीश्च तेषां मातामहानां पत्नीश्च तर्पयेत् । तत्पत्न्यश्चेति पाठे व्यत्ययेन प्रथमा । तत्पत्नीश्चेत्यर्थः । तर्पयेदित्यनुवर्त्तते । इत्येतत् पितृतर्पणम् । तेनामीषां तर्पणमवश्यं कार्य्यमिति तात्पर्य्यम् । केचित् इतिकारं न पठन्ति । तदत्र पाठक्रमात् प्रथमं पित्रादीनां ततो मात्रादीनां तदनु मातामहा-दीनां ततस्तत्पत्नीनां तर्पणं कर्त्तव्यम् । स्मृत्यन्तरेऽप्येवमेव तर्पण-क्रमोऽमीषामुपदिश्यते ।

“पित्रादित्रयपत्नीनां पृथग्देयं ततो जलम् ।
ततो मातामहानाञ्च क्रम एष हि तर्पणे” ॥

इति ।

"स्वपितृभ्यस्ततो दद्यान्मातृभ्यस्तस्य चाप्यनु।
ततो मातामहानाञ्च पितृव्यानान्ततःपरम्" ॥

इति।

"पितॄणामथ मातॄणां ततो मातामहस्य च" ॥

इति।

"पितृभ्यः प्रथमं दद्यात्ततो मातृभ्य एव च।
ततो मातामहानाञ्च पितृव्यस्य सुतस्य च" ॥

इति।

"अन्तर्मातामहान् कृत्वा मातॄणां यः प्रयच्छति।
तर्पणं पिण्डदानञ्च नरकं स तु गच्छति" ॥

इति चैवमादौ बहुलम्।

रघुनन्दनभट्टाचार्य्यास्तु, अथात्मीयांस्त्रीन् पितृतस्त्रीन् मातृतस्तत्पत्नीश्चेति सूत्रं पठित्वा, त्रीनिति पुंलिङ्गनिर्देशेन तत्पत्नीश्चेति पृथगुपादानेन च मातृत इत्यस्य मातामहपरत्वं वर्णयाम्बभूवुः। तच्चिन्त्यम्। पुंलिङ्गनिर्देशस्योपपादितत्वात्। तत्पत्नीश्चेति पृथगुपादानस्य मात्रादिसपत्नीपरिग्रहार्थत्वेनोपपत्तेश्च। अस्मदवलोकितेषु सूत्रग्रन्थेषु परिदृष्ट एव तु पाठोऽस्माभिर्लिखितः ॥ ९ ॥

## सनकादयश्च निवीतमिति मनुष्यधर्म्माः ॥ १० ॥

निवीतं यथा भवति तथा सनकादयस्तर्पणीयाः। निवीतत्वे हेतुगर्भविशेषणं मनुष्यधर्म्मा इति। छान्दसोऽयं प्रयोगः। यतस्ते मनुष्यधर्म्माणः अतएव तेषां तर्पणं निवीतं यथा भवति तथा

करणीयम्। निवीतं मनुष्याणामिति हि श्रूयते। व्यत्ययेन वा द्वितीयार्थे प्रथमा। सनकादीन् तर्पयेदिति वर्त्तते। इतिशब्द-स्तर्पणपरिसमाप्तिद्योतनार्थः। सनकादयो निवीत्यथ मनुष्यधर्म्मा-इति पाठे, अथानन्तरं निवीती भूत्वा सनकादीन् तर्पयेदित्यर्थः। समानमन्यत्। सनकादयश्च निवीतमिति मनुष्यधर्म्मः इति पाठे निवीतस्य मनुष्यधर्म्मत्वेनोक्त्या सनकादितर्पणं निवीतिना कर्त्तव्य-मित्यर्थादुक्तं भवति। सनकादयः खल्वपि। सनकः। सनन्दनः। सनातनः। कपिलः। आसुरिः। वोढुः। पञ्चशिखः। सनन्दनः इत्यत्र सनन्दः इति केचित् पठन्ति। आचार्य्येण खल्वत्रभवता तर्पणमात्रमुक्तं, तत्र तत्राञ्जलिसंख्या तु नोक्ता। सा च,

"एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः।
अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियस्त्वेकैकमञ्जलिम्" ॥

इति।

"मातृमुख्याश्च यास्तिस्रस्ताभ्यो दद्यात् त्रिरञ्जलीन्"।

इति चैवमादिस्मृत्यन्तरेभ्योऽवगन्तव्या। एकैकमञ्जलिमिति वचनं गोभिलसुतसंहिताया इति हलायुधः। गोभिलपुत्रस्येति तत्त्व-कारोऽप्याह। दिङ्नियमस्तु "मनुष्याणामेषा दिक् या प्रतीची" इति षड्विंशब्राह्मणात्। "प्राचीं देवा अभजन्त दक्षिणां पितरः प्रतीचीं मनुष्याः उदीचीमसुरा अपरेषामुदीचीं मनुष्याः" इति ब्राह्मणान्तराच्च प्रतिपत्तव्यः। तृप्यतु तृप्यतां वेत्यभिधानात् गोत्रनामादीनां प्रथमान्ततयोल्लेखोऽर्थादुक्तः। तथाच स्नानसूत्र-परिशिष्टम्।

"गोत्रं स्वरान्तं सर्व्वत्र गोत्रस्याक्षय्यकर्म्मणि।
गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति॥
सर्व्वत्रैव पितः प्रोक्तं पिता तर्पणकर्म्मणि।
पितुरक्षय्यकाले च अक्षयां तृप्तिमिच्छता॥
शर्म्मन्नर्घ्यादिके कार्य्ये शर्म्मा तर्पणकर्म्मणि।
शर्म्मणोऽक्षय्यकाले च पितॄणां दत्तमक्षयम्"॥

इति। तथा।

"अन्वारब्धेन सव्येन पाणिना दक्षिणेन च।
तृप्यतामिति सेक्तव्यं नाम्ना च प्रणवादिना"॥

इति। योगियाज्ञवल्क्यस्याप्येतत्। एतच्च पात्रकरणकतर्पणे बोद्धव्यम्। हस्तकरणकतर्पणे त्वञ्जलिनैव तर्पणम्। तथाच तत्रैवोक्तम्।

"श्राद्धे सेचनकाले तु पाणिनैकेन दापयेत्।
तर्पणे तूभयं कुर्य्यादेष एव विधिः स्मृतः"॥

इति। यत्तु पितृतर्पणे तृप्यतामित्यनन्तरं, एतत् सतिलोदकं तस्मै स्वधेति वाक्यरचना तत्त्वकृद्भिः कृता। तत्र प्रमाणं नास्ति। तैः किल असावेतत्ते उदकमिति इति जातूकर्ण्यवाक्यम्,

"नामगोत्रस्वधाकारैस्तर्प्याः स्युरनुपूर्व्वशः"।

इति योगियाज्ञवल्क्यवचनञ्च पश्यद्भिस्तथा लिखितम्। तच्चायुक्तम्। जातूकर्ण्यवाक्ये संबोधनान्तनामोल्लेखाभिधानेन तस्य गोभिलीयव्यतिरिक्तविषयत्वात्। गोभिलीयानां स्वशास्त्रे तृप्यतु तृप्यतां वेत्येतावन्मात्रविधानेन योगियाज्ञवल्क्योक्तस्वधाकार-

स्यापि तद्विषयत्वानुपपत्तेस्तस्यापि यजुर्व्वेदिविषयत्वात्। अतएव, ब्रह्मादिचतुर्षु तर्पणप्रयोगाकाङ्क्षायां गोभिलयाज्ञवल्क्योक्तप्रयोग-विधिर्ग्राह्यः इत्यभिधाय, ततश्च ब्रह्मा तृप्यतामिति प्रयोग इति तैरेवोक्तम्। तस्मात् गोभिलीयानां तृप्यतु तृप्यतां वेत्यन्तमेव तर्पणवाक्यं न तत्र सतिलोदकादेरुल्लेखः। अतएव तृप्यतामिति सेक्तव्यमित्युक्तम्। गृह्यपरिशिष्टेऽपि।

"बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म्म प्रकीर्त्तितम्।
तस्य तावति शास्त्रार्थे कृते सर्व्वः कृतो भवेत्"।

इति। छन्दोगपरिशिष्टोक्तेऽपि तर्पणे तिलोदकादेरुल्लेखो न कृतः। अन्यथा तदुक्तब्रह्मादितर्पणेऽपि ब्रह्मा तृप्यतामेतदुदकं तस्मै नम इत्यादिवाक्यरचना किमिति तैर्न क्रियते।

तदिदं स्नानाङ्गतर्पणमेवात्रभवता सूत्रकारेणोक्तम्। कथं ज्ञायते? स्नानविधिमभिधायैतस्य तर्पणस्याभिधानेन प्रकरणादस्य स्नानाङ्गताऽवगतेः।

"आप्लवने तु संप्राप्ते तर्पणं तदनन्तरम्।
गायत्रीं च जपेत् पश्चात् स्वाध्यायञ्चैव शक्तितः॥
आप्लवने तु संप्राप्ते गायत्रीं जपतः पुरा।
तर्पणं कुर्व्वतः पश्चात् स्नानमेव वृथा भवेत्"॥

इति स्नानसूत्रपरिशिष्टोक्तेश्च। अत्र खल्वाप्लवने तु संप्राप्ते इत्युपक्रमात् स्नानमेव वृथा भवेदिति चोपसंहारात् स्नानाङ्गमेव तर्पणं सूर्य्योपस्थानात् परं गायत्रीजपात् स्वाध्यायजपाच्च पूर्व्वं कर्त्तव्यमित्युक्तम्। गायत्रीजपात् परतस्तत्करणे तु तस्यायथाकाल-

कृतत्वेनाकृतकल्पत्वात् तदङ्गवैगुण्येन स्नानमेव वृथा भवेदिति निन्दा सुतरामुपपद्यते। प्रधानतर्पणञ्च पितृयज्ञरूपं छन्दोगपरिशिष्टे कात्यायनेनोक्तम्। तच्च ब्रह्मयज्ञात् परतः कर्त्तव्यमित्यपि तत्रैव तेनैवोक्तम्। तस्मात् स्नानाङ्गतर्पणं गायत्रीजपात् सामजपरूपात् ब्रह्मयज्ञाच्चार्व्वाक्, प्रधानतर्पणन्तु श्रुतिजपरूपात् ब्रह्मयज्ञात् परतः करणीयमित्यविरोधः। सूत्रकारेण खल्वत्रभवता स्नानाङ्गतर्पणानन्तरं साम्नां जपरूपो ब्रह्मयज्ञ उक्तः। कात्यायनेन तु प्रधानतर्पणात् पूर्व्वं श्रुतिजपरूपो ब्रह्मयज्ञोऽभिहित इति नास्ति विरोधगन्धोऽपि। तथाच कात्यायनः।

"वेदमादित आरभ्य शक्तितोऽहरहर्जपेत्"।

इति।

"यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञः स वोच्यते।
स चार्व्वाक् तर्पणात् कार्य्यः पश्चाद्वा प्रातराहुतेः।
वैश्वदेवावसाने वा नान्यत्रेति निमित्तकात्"॥

इति च। स्नानाङ्गं प्रधानञ्चेति तर्पणद्वयं प्रत्यहं कर्त्तव्यतया शास्त्रदेशितमित्यत्र कस्यापि न विप्रतिपत्तिः। तर्पणद्वयं सर्व्वे एव मन्यन्ते। तत्र केचित्तावदेवं मन्यन्ते। प्रधानतर्पणं खल्वेतत् स्नानाङ्गतर्पणेन विक्रियते। एवञ्च ज्योतिष्टोमस्येष्ट्युत्तरकालत्वं तद्विकृतौ सोम इव स्नानाङ्गतर्पणस्य सूर्य्योपस्थानोत्तरकालत्वं तद्विकृतौ प्रधानतर्पणेऽप्यतिदेशात् प्राप्नोति। तथाचैकेनैव तर्पणेन कृतेन तन्त्रेणोभयसिद्धिरित्याचक्षते।

सेयमभित्तौ चित्ररचना। द्वयोरेव सपरिकराभिहितत्वेन

प्रकृतिविकृतिभावस्यैवाभावात् । सपरिकराभिहिता प्रकृतिर्विकृतिरन्या इति हि मीमांसकसिद्धान्तः । स्नानाङ्गं तर्पणं खल्वत्रभवता सूत्रकारेण सपरिकरमभिहितम् । प्रधानतर्पणमपि कात्यायनेन सपरिकरमेवोपदिष्टं कर्म्मप्रदीपे । तत् कस्य केनाभिसंबन्धः । विस्तरेण चैतद्गृह्यसूत्रभाष्ये विचारितमस्माभिरिति नेह प्रस्तूयते ग्रन्थगौरवभयात् ॥ १० ॥

## ततः प्रत्युपस्थानं गायत्र्यष्टशतादीन् जप्त्वा ॥ ११ ॥

ततस्तर्पणादनन्तरं गायत्र्यष्टशतादीन् जप्त्वा सवितुः प्रत्युपस्थानं कुर्य्यात् । अष्टाधिकं शतमष्टशतम् । आदिना सन्ध्यासूत्रोक्तानि पक्षान्तराणि गृह्यन्ते । प्रातिलोम्येन चात्र संख्या निर्दिश्यते । सन्ध्यासूत्रे तावदष्टैकादशद्वादशपञ्चदशशतसहस्रसंख्यानां क्रमेणोपदेशः । अत्र वैपरीत्येन शतसंख्यामुपदिश्यादिना ततः प्राक्तनानि संख्यान्तराण्युररीकृतानि । शतस्याष्टाधिकत्वमात्रमत्र विशेषः । अथवा, अष्टशतादीनित्यत्राष्टपदेन सन्ध्यासूत्रोक्ताया आदिमाया अष्टसंख्यायाः, शतशब्देन तदुक्ताया उपान्तिमायाः शतसंख्यायाः, आदिपदेन च तदन्तरालपठितानां संख्यान्तराणामुपसंग्रहः ।

तत्त्वकारप्रभृतिभिरेवमेव सूत्रमिदं पठितं प्रत्युपस्थानपरतया व्याख्यातञ्च । अन्ये पुनरन्यथैतत् सूत्रं पठन्ति । तत्रोपस्थानं गायत्र्यष्टशतादीन् कृत्वेति केचित् । तत्र तस्मिन्नवसरे तर्पणावसाने इत्येतत् । गायत्र्यष्टशतादीन् कृत्वा जप्त्वा उपस्थानं सवितुरिति तस्यार्थः । अत्र फलतो न कश्चिद्विरोधः ।

ततो गायत्र्यष्टशतमादौ कृत्वा इत्यपरे। ततस्तर्पणानन्तरं आदौ वक्ष्यमाणब्रह्मयज्ञात् पूर्व्वं गायत्र्यष्टशतं कृत्वा इति तत्रार्थः ॥ ११ ॥

स्नानाङ्गतर्पणं सवितुः प्रत्युपस्थानञ्चाभिधायाथेदानीं सामजपरूपोब्रह्मयज्ञोऽभिधीयते।

**भासं दशस्तोभमुन्नयं गायत्रीसामौशनं शुद्धाशुद्धीये राजनरौहिणके बृहद्रथन्तरे पुरुषगतिर्महानाम्न्यो महादिवाकीर्त्त्यं ज्येष्ठसामानि देवव्रतानि पुरुषव्रतानुगानं तत्रश्यावीयमादित्यव्रतमेकविंशत्यनुगानम् ॥ १२ ॥**

जपेदिति विपरिणामेनानुषञ्जनीयम्। च-शब्दोऽत्र लुप्तवत् द्रष्टव्यः। भासादयः सामविशेषाः। तत्र यद्यपि भासादीनि कानिचित् सामान्यनेकत्र गीयन्ते, तथापि यान्यत्र शिष्टैः परिगृहीतानि तान्येवात्र प्रदर्श्यन्ते। अपरिशीलितसाम्नां साम्नामाश्रयभूतानामृचां त्रिधा पाठोपपत्तये यस्यामृचि यत् साम गीयते, तदपि प्रवेदयिष्यते।

तत्र, हाउ हाउ हाउ। ओहा। २। इत्युपक्रमं, हियाहाउवा ३। भा २३४५ स्। इत्यवसानं, भासं नाम साम अरण्यगाने, च्छन्दस्यार्चिके समाम्नातायां प्रत्नस्य वृष्णो अरुषस्य नूमहः इत्यस्यामृचि गीयते।

दशस्तोभं, तस्मिन्नेवार्चिके समाम्नातायां इन्द्रं नरो नेमधिता हवन्ते इत्यस्यामृचि अरण्यगाने गीयते। तच्च साम, हाउ। वि:। ओहा। चि:। इत्यादिकं, आयुर्धा अस्मभ्यं वर्चोधा देवेभ्या२३४५ :। इत्यन्तं, हा!उ इत्यादिकै: वय: इत्यन्तैर्दशभि: स्तोभैरुपेतम्।

उन्नयं नाम साम, आदित्यस्योन्नयमित्यार्षेयब्राह्मणे निर्दिश्यते। तच्च सामारण्यगाने, उत्। नयामि। इत्यादिके स्तोभे गीयते। स च स्तोभ: स्तोभग्रन्थे पठ्यते। तच्चैतत् साम, उन्नयामि। होइ। ३। इत्यादिकं, प्रियेधाम॑स्त्रियचरे २३४५। इत्यन्तम्।

गायत्रीसामौशनं द्विधा गीयते। एकं तावत् ऊहगाने उत्तरार्च्चिकगतं प्रेष्ठं वो अतिथि॑स्तुषे इत्यादित्यृचसूक्ते गीयते। तत्र प्रेष्ठं वो अतिथि॑ स्तुषे इति प्रथमा। कविमिव प्रश॑स्यं इति द्वितीया। त्वं यविष्ठ दाशुष: इति तृतीया। तस्य च साम्न:. प्रेष्ठं वा:। अता २३ इथीम्। इत्यादि:, दा २३४ यो ६ हाइ। इत्यन्त: प्रथमोऽंश:। कविमिवा। इत्यादि:, दा २३४ धो ६ हा। इत्यन्तो द्वितीयोऽंश:। तुवं यवायि। इत्यादि:, आ २३४ नो ६ हायि। इत्यन्तस्तृतीयोऽंश:। अपरञ्च छन्दस्यार्च्चिके समाम्नातायां प्रेष्ठं वो अतिथि॑स्तुषे इत्यस्यामृचि वेयगाने (गेयगाने) गीतम्। तच्चोत्तरं सामैव शिष्टा: इह समाद्रियन्ते। तच्चोहगानगीतस्य साम्न: प्रथमांशरूपमेव। तदपि सामोशनसा दृष्टमित्यौशनमाख्यायते। "आतिथ्यायां गायत्रीसामौशनम्" इति

लाट्यायनीयकल्पसूत्रभाष्ये, आतिथ्यायामिष्टौ औशनं गायेत् गायत्रीसाम। त्रैष्टुभान्यप्यौशनानि सन्ति अतो विशेषणार्थं गायत्रीग्रहणम्, इत्यग्निस्वामिनः।

शुद्धाशुद्धीये, शुद्धाशुद्धीयं नाम सामद्वयं, वेयगाने (गेयगाने) एतोन्विन्द्रꣳ स्तवाम शुद्धं इत्यस्यामृचि गीयते। ऋक् चेयं छन्दस्यार्च्चिके पठ्यते। तत्र, एतोन्विन्द्रꣳ स्तवामा। इत्यादि, ममा ३४ औहोवा। तू २३४५। इत्यन्तं प्रथमम्। एतोन्विन्द्रꣳ-स्तवा ६ मा। इत्यादिकं, औ २३४५ इ। डा। इत्यन्तं द्वितीयम्।

राजनं रौहिणञ्च नाम सामद्वयं अरण्यगाने, इन्द्रं नरो-नेमधिता हवन्ते इत्यस्यामृचि गीयते। ऋक् चेयं छन्दस्यार्च्चिके समाम्नायते। तत्र, हुम्। ३। हो। ३। हꣳ। ३। इत्यादि, वागीडा सूवोऽहहा २३४५ः। इत्यन्तं राजनम्। हाउ। ३। आइही। ३। इत्यादिकं, वा२३४औहोवा। ऊ २३४५। इत्यन्तं रौहिणम्।

बृहत् साम, ऊह्यगाने उत्तरार्च्चिकस्य प्रगाथरूपे सूक्ते गीयते। तत्र, त्वामिद्धि हवामहे इति प्रथमा ऋक्। स त्वं नश्चित्र वज्रहस्त इति द्वितीया। तत्र, च्छन्दस्यार्च्चिके समाम्नातायां प्रथमायामृचि गीयमानं, औहोयि त्वामिद्धि हवा-महा २ ए। इत्यादिकं, उहुवा ६ हाउ। वा। हस्। इत्यन्तं सामैवाद्रियन्ते शिष्टाः। न तु प्रगाथसूक्ते गीतम्। आर्षेयब्राह्मण-भाष्येऽपि, त्वामिद्धि हवामहे इत्यत्रैकं साम, औहोयि त्वामिद्धि

हवामहा ३ ए। इति द्वितीयतृतीयादिकं भरद्वाजस्य बृहन्नामधेयमित्युक्तम्।

रथन्तरं साम अरण्यगाने, उत्तरार्च्चिकस्य, अभित्वा शूर नोनुमइत्यस्यामृचि गीयते। साम चैतत्, अभित्वा शूर नोनुमोवा इत्यादि. ओवा ६। हाऊ वा। अस्। इत्यन्तम्।

सेतुसामापरनामधेयं पुरुषगतिः नाम साम अरण्यगाने, अहमस्मि प्रथमजा ऋतस्य इत्यस्यामृचि गीयते। ऋक् चेयं छन्दस्यार्च्चिके समाम्नायते। तदेतत् साम, हाउ। ३। सेतूꣳस्तर। इत्यादि, सेतूꣳस्तीर्व्वा चतुरा २३४५ :। इत्यन्तम्।

महानाम्न्य इति बहुवचनात् महानाम्नीसंज्ञकानां सर्व्वेषां साम्नामिह ग्रहणम्। तानि च सामानि महानाम्न्यार्च्चिके समाम्नातासु ऋक्षु गीयन्ते। तत्र, विदा मघवन् इति, अभिष्टमभिष्टिभिः इति, एवाहि शक्रो राये इति चैवमादिकासु तिसृषु ऋक्षु प्रथमं साम गीयते। विदा राये सुवीर्य्यं इति, योमꣳहिष्ठोमघोनां इति, ईशे हि शक्रस्तमूतये इति चैवमादिकासु तिसृषु ऋक्षु द्वितीयम्। इन्द्रं धनस्य सातये इति, पूर्व्वस्य यत्ते अद्रिव इति, प्रभोजनस्य वृत्रहन् इति चैवमादिकासु तिसृषु ऋक्षु तृतीयम्। एवाह्येव इत्यादिकेषु पञ्चसु पुरीषपदेषु गीतं चतुर्थं सामापि शिष्टैः परिगृहीतम्। तेषामपि तत्रैव पठितत्वात्। तदन्तर्भूतत्वाच्च। अत्र च, "महानाम्न्यश्चर्चः विदा मघवन्नित्याद्याः प्रकृत्या तिस्रः अध्ययनसिद्धासु नवसंख्याकाः त्यृचः"—इत्यार्षेयब्राह्मणभाष्यमनुसन्धेयम्।

तत्र, ए २। विदा मघवन् विदाः। इत्यादि, आया। हि पिबमा २ त्सुवा। इड़ा २३४५। इत्यन्तं प्रथमं साम। ए २। विदाराये सुवीरियाम्। इत्यादि, क्रातूः। छन्दऋता २ म्बृहात्। इडा २३४५। इत्यन्तं द्वितीयम्। ए २। इन्द्रस्वनस्य सातयाइ। इत्यादि, साखा। सुशेवो २ इयूः। इडा २३४५। इत्यन्तं तृतीयम्। आइवा। हियेवा २३४५। इत्यादिकं, वाहा ३१ उवा २३। ई ३४ डा। इत्यन्तं पञ्चसु पुरीषपदेषु गेयं चतुर्थम्।

महानाम्न्यो महावैराजं महादिवाकीर्त्यमिति केचित् पठन्ति। तत्र महावैराजमेवाधिकम्। तच्च, पिबा सोममिन्द्र मन्दतु त्वा इति च्छन्दस्यार्च्चिके समाम्नातायामृचि समुत्पन्नं, होइयाहोइयाहोइया ३४३ पिब। मत्स्वाहाउ। इत्यादिकं, इयपिबमत्स्वा ३। हाउवा ३। ई २३४५। इत्यन्तं इन्द्रस्य वसिष्ठस्य वा महावैराजनामकं साम अरण्यगाने गीयते।

महादिवाकीर्त्यं, ऐन्द्रं महादिवाकीर्त्यं सौर्य्यं वा दशानुगान-मित्यार्षेयब्राह्मणोक्तैर्दशभिरनुगानैरुपेतं महादिवाकीर्त्यं नाम साम। तत्र, हाउ। ३। आयुः। ३। इत्यादिकं, वाग्ज्योती-२३४५ :। इत्यन्तं प्रथममनुगानं शिरो नाम। एवाहियेवा २३४ औहोवा। इत्यादिकं, हिपूषान्। हिदेवा २३४५ :। इत्यन्तं द्वितीयमनुगानं ग्रीवा नाम। वयोमनोवयःप्राणाः। इत्यादिकं, वा ३। ई २३४५। इत्यन्तं तृतीयमनुगानं स्कन्धो नाम। वयोमना२३ः। इत्यादिकं, होइहोवाओ२३४५वा६५६। ऊ २३४५। इत्यन्तं चतुर्थमनुगानं कीकसो नाम। ऊर्क्।

हाउ। ३। इत्यादिकं, धर्मो ३ धर्मः। ३। इत्यन्तं पञ्चममनुगानं पुरीषनाम। धर्म्मविधर्म्म। ३। इत्यादिकं, ह्ऌवंव२०वं व२०वम्। ३। इत्यन्तं षष्ठमनुगानं पच्चो नाम। औहौहोवा होइ। २। इत्यादिस्तोभयुक्तं, अभ्राजीज्ज्योतिरभ्राजी२३४५ त्। इत्यन्तं, विभ्राड् बृहत् पिबतु सोम्यं मधु इत्यस्यामृचि गीयमानं सप्तममनुगानमात्मा नाम। भूमिः। ३। अन्तरिक्षं। ३। इत्यादिकं, भूताया २३४५। इत्यन्तं अष्टममनुगानं ऊरुनाम। द्यौः। ३। अन्तरिक्षम्। ३। इत्यादि, ए ३। आयुषे २३४५। इत्यन्तं नवममनुगानमप्यूरुनाम। हाउ ३। ज्योतिः। २। इत्यादि, औ हो वा। ई २३४५। इत्यन्तं दशममनुगानं पुच्छं नाम। तदेतत् दशानुगानोपेतं महादिवाकीर्त्त्यं नाम साम सुपर्णमित्याचक्षते। तदत्र सप्तममनुगानं विहायान्यानि सामानि न खलु ऋक्षु गीयन्ते। किन्तु ऋगक्षररहितान्येव स्तोभेषु गीयन्ते। सर्व्वाणि चैतानि सामान्यरण्यगाने पठ्यन्ते।

ज्येष्ठसामानि, आज्यदोहान्येव ज्येष्ठसामानीत्याख्यायन्ते। तथाच पञ्चविंशब्राह्मणम्। "ज्येष्ठसामानि वा एतानि" इति। व्याख्यातञ्चैतद्भाष्यकृद्भिः "एतान्याज्यदोहानि साम्नां मध्ये ज्येष्ठानि प्रथमभूतानि खलु" इति। त्रीणि तावदाज्यदोहानि अरण्यगाने, मूर्द्धानं दिवो अरतिं पृथिव्या इत्येतस्यां छन्दस्यार्च्चिके उत्तरार्च्चिके च समाम्नातायामृचि गीयन्ते। तत्र तावत्, हाउ। ३। आज्य दोहम्। ३। मूर्द्धानं दायि। इत्यादिकं, आज्यदोहम्। २। ए। आज्यदोहा २३४५म्। इत्यन्तं प्रथमम्। हाउ ३। हुम्। चिदो-

हम् । ३ । इत्यादि, चिदो३हाउ । वा ३ । ई २३४५ । इत्यन्तं द्वितीयम् । हाउ । ३ । चोहम् । ३ । इत्यादि, चो ३ हाउ । वा ३ । ए ३ । ऋतम् । इत्यन्तं तृतीयम् ।

देवव्रतानि त्रीणि सामान्यारण्यके गीयन्ते । तानि चैतानि सामानि न खल्वपि ऋक्षु गीयन्ते किन्तु ऋगक्षररहितान्येव स्तोभेषु ।

तत्र, अधिप । ताइ । मित्रप । ताइ । इत्यादिकं, आउ । वा २३ । ना २३४ माः । इत्यन्तं प्रथमम् । अधिप । ताइ । मित्रप । ताइ । इत्यादिकं, युयो ३ । आउ । वा २३ । ना २३४ माः । इत्यन्तं द्वितीयम् । अधिप । ताइ । मित्रप । ताइ । इत्यादिकं, आउ । वा २३ । ना २३४ माः । इत्यन्तं तृतीयम् । तेषां खल्वेषां त्रयाणां देवव्रतानामारम्भः परिसमाप्तिश्च समानैव । मध्ये तु वैलक्षण्यमस्ति । तच्च गानग्रन्थाद्बुध्यितव्यम् ।

पुरुषव्रतानुगानं, पुरुषव्रतनामकानि षट् सामानि छन्दस्यार्च्चिके समाम्नातासु षट्सु ऋक्षु गीतानि । तत्र, सहस्रशीर्षा पुरुष इति प्रथमा । त्रिपादूर्द्ध उदैत् पुरुष इति द्वितीया । पुरुषएवेदं सर्व्वमिति तृतीया । तावानस्य महिमा इति चतुर्थी । ततो विराडजायत इति पञ्चमी । कयानश्चित्र आभुवदिति षष्ठी । यद्यप्यार्षेयब्राह्मणे, "द्वे पुरुषव्रते पञ्चानुगानञ्चैकानुगानञ्च" इति पुरुषव्रतस्य द्वित्वमुक्तं, तथापि तत्र पञ्चानुगानञ्चैकानुगानञ्चेत्यभिधानात् पञ्चानुगानपदाभिधेयं सामपञ्चकं समु-

दायरूपेणैकं एकानुगानञ्चैकमित्यभिप्रायेण पुरुषव्रतस्य द्वित्व-मुक्तम्। परमार्थतस्तु षड़ेव पुरुषव्रतानि भवन्ति। अतएव "एतानि षडृगाश्रितानि सामानि द्वे पुरुषव्रते इत्यभिधेयानि। तेनाद्यं पञ्चानुगानं पञ्चऋगाश्रितैरनुगानैरुपेतं द्वितीयमेकानुगानं एकर्चाश्रितेन सामरूपेणानुगानेनोपेतमिति समुदायापेक्षया द्विवचनम्" इत्यार्षेयब्राह्मणभाष्ये सायणाचार्य्याः।

तत्र तावत्, उहुवा हाउ। ३। इत्यादि, वा ३। इट् इडा २३४५। इत्यन्तं पञ्चानुगानस्य प्रथममनुगानम्। उहोवौ होवा २। ३। इत्यादि, औहोवा। ऊ २३४५। इत्यन्तं द्वितीयम्। इयौ होवा २। ३। इत्यादि, औहोवा। ई २३४५। इत्यन्तं तृतीयम्। हाउ। ३। तावानस्य। महा २३ इमा ३। इत्यादि, हाउ ३। वा ३ इट् इडा २३४५। इत्यन्तं चतुर्थम्। हाउ३वा। ततोविराडजायत। इत्यादि, हाउ३वा ३। ई २३४५। इत्यन्तं पञ्चमम्। गतं तावत् पुरुषव्रतं पञ्चानुगानम्। एकानुगानं खल्वपि। हाउ ३। अस्मीनस्मिन्। ३। इत्यादि, हा२३४औहोवा। सुवर्ज्योती २३४५ :। इत्यन्तम्। सामानि चैतानि सर्वाण्येवा-रण्यगाने गीयन्ते।

तवश्यावीयं नाम साम, ॐ हᳶ २३४५। ॐ भूः। इत्यादि, अतवद। ३। हᳶवंव२वंव२वम्। ३। इत्यन्तं अरण्य-गानात् पृथगेव स्तोभगायत्रीनामकर्चोर्गीयते इति केचित्। केचित्तदप्यरण्यगानान्तर्गतमेव वदन्ति। परमार्षेयब्राह्मणे अरण्यगानगीतानां साम्नामृषिनामादिकमुपदिष्टमस्ति। तत्र-

श्यावीयस्य तु साम्नस्तत्रोपदेशो न दृश्यते। तेनैतत् पृथगेव न त्वरण्यगानान्तर्गतमिति युक्तं वक्तुम्। पूर्व्वोक्तं साम तवश्यावीयमिति केचिन्मन्यन्ते। तवश्याव इत्यस्यामुत्पन्नं तवश्यावीयमिति सामविधानब्राह्मणभाष्ये सायणाचार्य्याः। साम्प्रदायिकास्तु, अग्नेरिलान्दं पञ्चानुगानमिरान्नं वा इत्यार्षेयब्राह्मणोक्तमग्नेरिलान्दमिरान्नं वा पञ्चानुगानं तवश्यावीयं मन्यन्ते। व्यवहरन्ति चैवम्। स तवश्यावीयानि सामानि ब्रूते इति निदानवचनं, अग्नेरिलान्दं पञ्चानुगानं तवश्यावीयमित्यस्य संज्ञा निदानवचनात्,—इत्यूह्यगानलेखश्च तत्र प्रमाणमाचक्षते। छन्दोगापरसूत्रनामधेये पितृमेधसूत्रेऽपि, तवश्यावीयानि सामानि,—इति बहुत्वेन निर्दिष्टम्। सौत्रमेकवचनन्तु पञ्चानुगानपुरुषव्रतवत् समुदायापेक्षयाऽप्युपपद्यते। तदत्र भगवन्तोभूमिदेवाः प्रमाणम्।

तत्र तावत्, हु इति स्तोभे गीयमानं, हाउ। ३। ऊ २। ३। इत्यादिकं, इट्इड़ा २३४५। इत्यन्तं साम प्रथममनुगानम्। अग्निरस्मि जन्मना जातवेदा इत्यस्यामृच्युत्पन्नं, हाउ३वा। इत्यादिकं, सुवः। इडा। इत्यन्तं साम द्वितीयमनुगानम्। पात्यग्निर्विपो अग्रं पदं वेः इत्यस्यामृचि गीयमानं, हाउ। ३। इत्यादिकं, हा ३१ उवा २३। ज्यो२३४तीः। इत्यन्तं तृतीयमनुगानम्। इन्द्रं नरो नेमधिता हवन्ते इत्यस्यामृचि गीयमानं, इया २। ३। इया हाउ। ३। इत्यादिकं, ए ३। व्रतमिसुवरेशकुनः। इत्यन्तं साम चतुर्थमनुगानम्। भ्राजन्त्यग्ने समिधान दीदिवः

इत्यस्यामृच्युत्पन्नं, भ्राजा औहो होहाइ इत्यादिकं, हो ५ इ। डा। इत्यन्तं साम पञ्चममनुगानम्।

आदित्यव्रतमेकविंशत्यनुगानम्। एकविंशत्यनुगानमिति शाण्डिलीपुत्रस्य मतम्। वार्षायणीपुत्रस्य तु मते द्वाविंशत्यनुगानमेतत्। तथाचार्षेयब्राह्मणम्। आदित्यव्रतमेकविंशत्यनुगानꣳ शाण्डिलीपुत्रः द्वाविꣳशतिरिति वार्षायणीपुत्रः इति। सूत्रकारेण त्वत्रभवता शाण्डिलीपुत्रमतमेवोररीकृतमित्यवगन्तव्यम्।

तत्र, सम्। त्वा। भूतानि। इत्यादिके स्तोभे गीयमानं साम प्रथममनुगानम्। वैश्वदेवाः समैरयाः संशानानि भूतवदित्येतत् सर्व्वं मिलित्वा प्रथमस्यानुगानस्य नामधेयम्। सन्त्वाभूतान्यैरयदित्यादिके तदाश्रयभूते देवताबाहुल्यम्, समैरयपदादेः श्रवणादुक्तनामत्वं बोद्धव्यमिति सायणाचार्य्याः।

चित्रं देवानामुदगादनीकं, अन्तश्चरति रोचना, इत्यनयोर्ऋचोर्गीयमानं, उवो २ उवि। इत्यादिकं, ए ३। देवा दिवा ज्योती२३४५ः। इत्यन्तं साम द्वितीयमनुगानम्।

आयं गौः पृश्निरक्रमीदित्येतस्यामृचि सामद्वयं गीयते। तत्र, उवो २। त्विः। ह्निगो २। त्विः। इत्यादिकमाद्यं गन्धर्व्वाप्सरसामानन्दसंज्ञकं साम तृतीयमनुगानम्। उवो २। त्विः। ह्निगो। त्विः। इत्यादिकं गन्धर्व्वाप्सरसां प्रतिनन्दपत्त्रनामकं द्वितीयं साम चतुर्थमनुगानम्।

उदुत्यं जातवेदसं, चित्रं देवानामित्यादिकृग्द्वये गीयमानं, हाउ। त्विः। भ्राजा ओवा। इत्यादि पुरतोयुक्तं सौर्य्यातीषङ्ग-

नामकं साम पञ्चममनुगानम्। अत्र च, अतीषङ्गो नाम परस्पर-मिश्रणम्। उभयोर्ऋचोः सौर्थ्यत्वाद् व्यतिषज्य गेयत्वाच्चैतन्नाम सम्पन्नमित्यार्षेयब्राह्मणभाष्यमनुसन्धेयम्।

अदिद्युतत्। विश्वं। भूतं। इत्यादिस्तोभे गीयमानम्, हाउ। त्रिः। सहोभ्राजेत्यादिकमिन्द्रस्य सधस्थनामकं साम षष्ठमनुगानम्।

औ हो औ हो वा। इत्यादि पुरतः स्तोभयुक्तं, अन्तश्चरति रोचना इत्यस्यामृचि गीयमानं, मरुतां भूतिसंज्ञकं साम सप्तम-मनुगानम्।

प्रजापतेस्तिस्रः सार्पराज्ञ्य इति, सर्पाणां सार्पराज्ञ्य इति, अर्बुदस्य सर्पस्य सार्पराज्ञ्य इति वा समाख्यायमानं सामत्रयं यथाक्रममष्टमनवमदशमानुगानमित्याख्यायते। तत्र, हाउ। २। वा। इन्द्रः। इत्यादि पुरतः स्तोभयुक्तं, आयं गौः पृश्निरक्रमी-दित्यस्यामृचि गीयमानं साम अष्टममनुगानम्। हाउ २ वा। भूतम्। इत्यादि स्तोभसंयुक्तं, अन्तश्चरति रोचनेत्यस्यामृचि गीयमानं साम नवममनुगानम्। हाउ २ वा। आपः। तेजः। इत्यादिकं त्रिंशद्धाम विराजति इत्यस्यामृचि गीयमानं साम दशममनुगानम्।

उद्यन्। उत्। यन्। इत्यादिस्तोभे गीयमानं उद्यंल्लोकानरोचयः। होइ इत्यादिकं घर्म्मस्य रोचनं इन्द्रस्य रोचनं वा नाम साम एकादशमनुगानम्।

इन्द्रस्य परिधिसंज्ञकानि षट् सामानि यथाक्रमं द्वादशत्रयो-

दशचतुर्दशपञ्चदशषोड़शसप्तदशानुगानानि। तत्र, उदुत्यं जातवेदसमिति त्र्यचे समुत्पन्नं, हाउ ३। भ्राजा श्रोवा। इत्यादिकं साम द्वादशमनुगानम्। तस्मिन् त्र्यचे उदुत्यमिति प्रथमा ऋक्। अपत्ये तायवो यथा इति द्वितीया। अदृश्रन्नस्य केतव इति तृतीया। तस्मिन्नेव त्र्यचे गीयमानं, हाउ ३। शुक्रा श्रोवा। इत्यादि पुरतः स्तोभयुक्तं साम त्रयोदशमनुगानम्। तरणिर्विश्वदर्शत इति त्र्यचे गीयमानं, हाउ ३। भूता श्रोवा। इत्यादिस्तोभयुक्तं साम चतुर्दशमनुगानम्। तत्र, तरणिरिति प्रथमा ऋक्। प्रत्यङ् देवानां विशः इति द्वितीया। येनापावक चक्षसा इति तृतीया। तस्मिन्नेव त्र्यचे गेयं, हाउ। त्रिः। तेजाश्रोवा। इत्यादिस्तोभयुक्तं साम पञ्चदशमनुगानम्। उद्यामेषिरजः पृथु इत्यादिके त्र्यचे गीयमानं, हाउ। त्रिः। सत्या श्रोवा। इत्यादिस्तोभपूर्व्वं साम षोड़शमनुगानम्। तत्र, उद्यामेषीति प्रथमा ऋक्। अयुक्त सप्त शुन्ध्युव इति द्वितीया। सप्त त्वा हरितो रथे इति तृतीया। तस्मिन्नेव त्र्यचे समुत्पन्नं, हाउ। त्रिः। ऋता श्रोवा। इत्यादिस्तोभपूर्व्वं साम सप्तदशमनुगानम्।

वाक्। मनः। प्राणः। इत्यादिस्तोभे गीयमानं, ऋतूनां वागादिपित्र्यमित्याख्यायमानं, वाक्। मनः। प्राण इत्यादिकं साम अष्टादशमनुगानम्।

उदुत्यं जातवेदसं, चित्रं देवानामित्यादिके ऋग्द्वये परस्परव्यतिषङ्गेन गीयमानं द्वितीयोऽतीषङ्गस्तन्मित्रावरुणयोः श्रोत्रमित्याचक्षते चक्षुश्च तदेवैके इति व्यपदिष्टं, हाउ। त्रिः।

भ्राजाभ्राजेत्यादिस्तोभपूर्व्वं साम उनविंशमनुगानम्। यद्य-प्यार्षेयब्राह्मणे विंशानुगानत्वेनेदं निर्दिष्टं, अन्तश्चरति रोचना इत्यस्यामृचि गीयमानं, तन्मित्रावरुणयोश्चक्षुरित्याचक्षते श्रोत्रन्तु तदेवैके इत्युक्तं, अन्तर्देवेषू ३ रोचा १ सा २ यि। इत्यादिकं सामैव तु तत्रोनविंशानुगानतयोक्तं, तथापि द्वाविंशत्यनुगानपक्ष-एव तदुनविंशानुगानं भवति, न त्वेकविंशत्यनुगानपक्षे। तत्र तस्यागेयत्वात्। तथाचार्षेयब्राह्मणे। अन्त्यं वैकल्पिकम्—इति। व्याख्यातञ्चैतद्भाष्यकृद्भिः। अन्तर्देवेषू ३ रोचा १ सा २ यि इत्यस्य गानं वैकल्पिकम्। एकविंशत्यनुगानपक्षे न गेयम्। द्वाविंशत्यनु-गानपक्षे तु गीयते इत्यन्तेन। अनयैव रीत्या उत्तरयोरपि अनुगानयोः संख्यावैलक्षण्यं धीमद्भिः समाधेयम्।

उदुत्यं जातवेदसं, इन्द्रं नरो नेमधिता इत्यनयोरृचोः परस्पर-व्यतिषङ्गेन गीयमानं, हाउ। त्रिः। भ्राजा श्रोवा। इत्यादि-स्तोभपूर्व्वं तृतीयोऽतीषङ्गस्तदिन्द्रस्य शिर इत्याचक्षते इत्यभिहितं साम विंशमनुगानम्।

उत्। नयामि। आदित्यम्। इत्यादिस्तोभे गीयमानं, आदित्यस्योन्नयं तदादित्यात्मेत्याचक्षते इति व्यपदिष्टं, उन्नयामि। होइ। इत्यादिकमृगक्षररहितं साम एकविंशमनुगानम्। तदिदमेकविंशत्यनुगानमादित्यव्रतम्। तदेतत् सर्व्वमार्षेयब्राह्मणे स्पष्टम्। तथा चार्षेयब्राह्मणम्। आदित्यव्रतमेकविꣳशत्यनुगानꣳ शाण्डिलीपुत्रोद्वाविꣳशतिरिति वार्ष्यायणीपुत्रो वैश्वदेवाः समैरयाः सꣳशानानि भूतवदित्येकं, चित्रं देवानामन्तरिति द्वयोरपरं,

गन्धर्व्वाप्सरसामानन्दप्रतिनन्दपक्षौ, सौर्य्योऽतीषङ्ग,इन्द्रस्य च सधस्थं, मरुतां भूतिः, प्रजापतेस्तिस्रः सार्पराज्ञ्यः सर्पाणां वाऽर्बुदस्य वा सर्पस्य, घर्म्मरोचनमिन्द्रस्य वा, षडैन्द्राः परिधय, ऋतूनां वागादि पित्र्य, मन्त्यं वैकल्पिकं, तन्मित्रावरुणयोश्चक्षुरित्याचक्षते श्रोत्रं च तदेवैके, द्वितीयोऽतीषङ्गस्तन्मित्रावरुणयोः श्रोत्रमित्याचक्षते चक्षुश्च तदेवैके, तृतीयोऽतीषङ्गस्तदिन्द्रस्य शिर इत्याचक्षत आदित्यस्योन्नयं तदादित्यात्मेत्याचक्षते इति ।

केचित्तु भासं दशस्तोभं उन्नयं औशनं शुद्धाशुद्धीये राजनरौहिणे बृहत्साम रथन्तरं सेतुसाम महानाम्न्यः पुरीषपदानि महादिवाकीर्त्त्यं ज्येष्ठसामानि आज्यदोहानि देवव्रतानि पुरुषव्रतानि तवश्श्यावीयं सन्त्वाभूतानि उवी चित्रं देवानामन्तश्चरति तदुत्तरसामद्वयं अतीषङ्गः सधस्थं मरुतां भूतिः सार्पराज्ञ्यः धर्म्मरोचनं परिधयः ऋतुसाम चक्षुःसाम श्रोत्रसाम शिरःसाम इत्येतानि जप्तव्यानीति वदन्ति ।

तत्र तावत्, ज्येष्ठसाम्नामाज्यदोहानाञ्च पृथगुपन्यासः कथमिति न खल्वधिगच्छामि ! आज्यदोहान्येव तु ज्येष्ठसामानीति पुरस्तान्निवेदितम् । ज्येष्ठसामान्याज्यदोहानीति सूत्रपाठे सामानाधिकरण्येनान्वयोपगमात् आज्यदोहानां ज्येष्ठसामत्वमुक्तमित्याख्येयम् । सन्त्वाभूतानीत्यादिना एकविंशत्यनुगानमादित्यव्रतमेव भङ्ग्यन्तरेणोक्तमिति द्रष्टव्यम् ॥ १२ ॥

विशेषेण साम्नां विनियोगमभिधाय अथेदानीं सामान्येन तेषां विनियोगमाह,—

पर्कादारभ्य यथाशक्त्यहरहर्ब्रह्मयज्ञ इति गोभिलीया गोभिलीयाः ॥ १३ ॥

पर्को नाम साम वेयगानारम्भ एव अग्न आयाहि वीतये इति च्छन्दआर्चिकस्य प्रथमायामृचि गीयते। तस्मात् पर्कात् साम्न आरभ्य शक्त्यनुसारेण प्रतिदिनं सामानि जपेत्। योऽयं साम्नां जपः, स ब्रह्मयज्ञः इति गोभिलीया मन्यन्ते। ब्रह्मयज्ञाय इति पाठे योऽयं साम्नां जपः स ब्रह्मयज्ञफलसिद्ध्यर्थं इति व्याख्येयम्।

"ब्रह्मयज्ञार्थसिद्ध्यर्थं विद्यामाध्यात्मिकीं जपेत्"।

इति हि स्मरन्ति। ब्रह्मयज्ञमिति पाठे योऽयं साम्नां जपः तं ब्रह्मयज्ञमाचक्षते गोभिलीया इति वर्णनीयम्। द्विर्वचनं स्नानविधिग्रन्थसमाप्तिप्रज्ञापनार्थम्।

---

अत्रैव शिवम्।

ब्रह्मार्पणं भवतु।

विप्रेण चन्द्रकान्तेन तत्त्वसिद्धान्तवेदिना।
छन्दोगस्नानसूत्रस्य भाष्यं काश्यां विनिर्मितम्॥
यः सर्व्वज्ञः सर्व्वशक्तिर्मामत्र विनियुक्तवान्।
प्रीयतामनया कृत्या स एव प्रभुरीश्वरः॥
पवित्रयन्तु सन्तोऽपि दृष्टिलेशार्पणादिदम्।
प्रसिद्धं खल्वमीषां हि परस्यानुग्रहो व्रतम्॥
वस्तुनोऽतिगभीरत्वात् दुर्लच्यत्वाद्विशेषतः।
दौर्व्बल्याच्चैव मद्बुद्धेर्यद्वचोऽभवदन्यथा॥
तदीश्वरो मे शमयेत् करुणासिन्धुरच्युतः।
मान्या मयि दयावन्तो महान्तः शोधयन्तु च॥
अन्ध इव स्फुटदोषे गुणेषु बिरलेषु वैनतेय इव।
एवं शीलाः सन्तो भवन्ति वसुधातले नमस्तस्मै॥

इति सेरपुरनगरवास्तव्यवन्द्यघटीयमहामहोपाध्यायराधाकान्त-
सिद्धान्तवागीशभट्टाचार्य्यात्मजब्रह्ममयीगर्भसम्भूतश्रीचन्द्र-
कान्ततर्कालङ्कारभट्टाचार्य्यविरचितं छन्दोगस्नान-
सूत्रभाष्यं समाप्तम्।

ॐ

# स्नानसूत्रपरिशिष्टम् ।

प्रणम्य परमात्मानं पितरौ च गुरून् परान् ।
परिशिष्टं स्नानविधेर्व्याख्यास्यामि समासतः ॥

**आप्लवने तु संप्राप्ते तर्पणं तदनन्तरम् ।**
**गायत्रीं च जपेत् पश्चात् स्वाध्यायञ्चैव शक्तितः ॥ १ ॥**

आप्लवने इति । आप्लवनं स्नानम् । तस्मिन् संप्राप्ते पुनस्तदनन्तरं तर्पणं कुर्य्यात् । तदनन्तरमित्यनेन स्नानसूत्रोक्तस्य सूर्य्योपस्थानानन्तर्य्यस्य परामर्शः । न तु स्नानानन्तर्य्यस्य । अनतिप्रयोजनत्वात् । उपजीव्यविरोधापत्तेश्च । आप्लवने संप्राप्ते यत्तर्पणं, तत् सूर्य्योपस्थानानन्तरं कर्त्तव्यमित्यर्थः । तदनेन स्नानाङ्गतर्पणस्यैव कालोऽयमभिहितः । कथं ज्ञायते ? आप्लवने तु संप्राप्ते इत्युपक्रमात्, स्नानग्रन्थे स्नानाङ्गतर्पणस्यैवाभिधानाच्च, प्रधानतर्पणस्य परामर्शासम्भवात् । पश्चात् स्नानाङ्गतर्पणात् परं गायत्रीं स्वाध्यायं वेदञ्च यथाशक्ति जपेत् । शक्तित इति गायत्रीजपे स्वाध्यायजपे चोभयत्रैवान्वेति । तथा च्छन्दोगपरिशिष्टम् ।

"वेदमादित आरभ्य शक्तितोऽहरहर्जपेत्" ।

इति । स्नानग्रन्थे स्नानाङ्गतर्पणानन्तरं जप्तव्यतयोक्तानां साम्नां

वा स्वाध्यायपदेन परामर्शः । अन्तरङ्गत्वात् । शक्तित इत्येतावान् परं विशेषः ॥ १ ॥

अन्वयेनोक्त्वा व्यतिरेकेणैतद् द्रढ़यति,—

आप्लवने तु संप्राप्ते गायत्रीं जपतः पुरा ।
तर्पणं कुर्व्वतः पश्चात् स्नानमेव वृथा भवेत् ॥ २ ॥

आप्लवनेत्विति । ऋजुरक्षरार्थः । गायत्रीजपानन्तरं स्नानाङ्गं तर्पणं कुर्व्वतस्तर्पणस्यायथाकालकृतत्वेनाकृतकल्पत्वात् तदङ्गवैगुण्येन स्नानमेव वृथा भवेदिति निन्दावादः सुतरामुपपद्यते । तस्मादुपक्रमोपसंहाराभ्यां स्नानाङ्गतर्पणविषयत्वं वचनस्य सुव्यक्तमवगम्यते । तदत्रभवता सूत्रकारेण मध्याह्नस्नानाङ्गतर्पणस्य सूर्य्योपस्थानानन्तरं करणोपदेशात्,

"यथाऽह्नि तथा प्रातर्नित्यं स्नायादनातुरः" ।

इति कात्यायनेन च प्रातःस्नानेऽप्यह्नःस्नानधर्म्मातिदेशात्, उभयत्रैव सूर्य्योपस्थानोत्तरत्वं तदङ्गतर्पणस्य । तदन्यत्र तूपरागादौ स्नानाङ्गतर्पणं स्नानप्रयोगान्तर्गतमेवेत्यविवादमेव । यत्तु

"स्नानादनन्तरं तावत् तर्पयेत् पितृदेवताः ।
उत्तीर्य्य पीड़येद्वस्त्रं सन्ध्याकर्म्म ततःपरम्" ॥

इति चतुर्विंशमतनाम्ना वचनं पठन्ति । तस्य कारिकारूपतया तत्र मूलं मृग्यम् । तस्य समूलत्वेऽपि गोभिलीयानां तावत् तन्न भवत्येव । तेषां स्वशास्त्रोपरोधापत्तेः । तच्चान्याय्यम् ॥ २ ॥

प्रसङ्गात् गायत्रीजपे कञ्चिद्विशेषमाह,—

**कदाचिदपि नो विद्वान् गायत्रीमुदके जपेत् ।**
**गायत्र्यग्निमुखी यस्मात् तस्मादुत्थाय तां जपेत् ॥३॥**

गायत्री यस्मादग्निमुखी, तस्मात् जलादुत्थाय गायत्रीं जपेत्। अतिरोहितार्थमन्यत् । वृद्धमनुस्त्वार्द्रवाससो जलेऽपि गायत्री-जपमभ्यनुजानाति ।

"यदि स्यात् क्लिन्नवासा वै गायत्रीमुदके जपेत् ।
अन्यथा तु शुचौ भूम्यां कुशोपरि समाहितः" ॥

इति । आचार्य्यस्तु नैतदनुजानातीति लक्ष्यते । कुतः ? कदा-चिदपीत्यभिधानात् । जलादुत्थाय जपस्योपदेशाच्च ॥ ३ ॥

**यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ।**
**जपहोमौ तथा दानं सर्व्वं तन्निष्फलं भवेत् ॥ ४ ॥**

यज्जले इति । इत्थम्भावलक्षणे तृतीये । शुष्कवस्त्रोपलक्षितेन जले आर्द्रवस्त्रोपलक्षितेन स्थले यज्जपादिकं क्रियते, तत् सर्व्वं निष्फलं भवति ॥ ४ ॥

**गृहेषु तत् समं जप्यं गोष्ठे शतगुणं भवेत् ।**
**नद्यां शतसहस्रञ्च अनन्तं देवसन्निधौ ॥ ५ ॥**

गृहेष्विति । तत् जप्यं गृहेषु चेत् क्रियते तदा समं समफलम् । नद्यामिति सामीप्याधारे सप्तमी । शतसहस्रं लक्षम् ॥ ५ ॥

दशभिर्जन्मजनितं शतेन तु पुराकृतम् ।
त्रियुगन्तु सहस्रेण गायत्री हन्ति दुष्कृतम् ॥ ६ ॥

दशभिरिति । दशसंख्यकजपेनैतज्जन्मजनितं, शतसंख्यजपेन पूर्व्वजन्मकृतं, सहस्रसंख्यजपेन युगत्रयकृतं पापं गायत्री हन्ति ॥ ६ ॥

सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीन्तु जपन् विप्रो न स पापेन लिप्यते ॥७॥

सहस्रेति । देवीं गायत्रीम् । गायत्र्याः सहस्रसंख्यजप उत्तमः । शतसंख्यजपो मध्यमः । दशसंख्यजपोऽधमः । पापे विद्यमाने तल्लेपस्यावश्यम्भावात् पापेन न लिप्यते इत्यनेनार्थात् पापक्षय-उक्तः । तत्राप्यायासतारतम्यात् पापक्षयतारतम्यं प्रतिपत्तव्यम् । "फलस्य कर्म्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यात्" इति जैमिनिसूत्रात् । अतएव पापक्षयार्थंगायत्रीजप एवायं संख्याविकल्पः । "ध्यानयुक्तमावर्त्तयेदोंपूर्व्वां गायत्रीमष्टकृत्व एकदेशकृत्वोद्वादशकृत्वः पञ्चदशकृत्वः शतकृत्वः सहस्रकृत्वश्च" इति सन्ध्यासूत्रोक्तः संख्याविकल्पस्तु सन्ध्योपासनविषय इत्यनयोर्न विरोधः ॥ ७ ॥

व्याहृतिभिः प्रतिप्रणवां गायत्रीञ्च प्रतिप्रति ।
षट्प्रणवसंयुक्तां गायत्रीजपलक्षणम् ॥ ८ ॥

व्याहृतिभिरिति । इत्थम्भावलक्षणे तृतीया । प्रतिप्रतीत्यत्रैकः प्रतिशब्द उपसर्गः । अपरश्च प्रतीकपरः । एकदेशेन समुदाय-

लक्षणात् । छान्दसो वा प्रयोगः । तथाच प्रत्येकं तिसृणां व्याहृतीनामादौ गायत्र्याः प्रत्येकं पादत्रयस्यादौ च प्रणवप्रयोगात् मिलित्वा षट्प्रणवाः सम्पद्यन्ते । तदेवं षट्प्रणवसंयुक्तां गायत्रीं जपेदिति विपरिणामेनानुषञ्जनीयम् । तदिदं गायत्रीजपलक्षणं गायत्रीजपप्रकारः । षट्प्रणवसंयुक्तमिति पाठे गायत्रीजपलक्षण-मित्यस्य विशेषणमेतत् । पूर्व्वं पापक्षयार्थं यो गायत्रीजप उक्तः, स एवानेन विशेषितः । उपस्थितत्वात् । एवञ्च सन्ध्योपासन-कालीने गायत्रीजपे नैष विशेषोऽभिनिविशते । अनुपस्थितेः । अतएव, "ॐपूर्व्वां गायत्रीम्" इति सन्ध्यासूत्रेण,

"तिष्ठेदोदयनात् पूर्व्वां मध्यमामपि शक्तितः ।
आसीतोड्गमाच्चान्त्यां सन्ध्यां पूर्व्वत्रिकं जपन्" ॥

इति कर्म्मप्रदीपवचनेन च न विरोधः । पूर्व्वत्रिकं प्रणवव्याहृति-गायत्रीरूपमिति परिशिष्टप्रकाशः । इदं हि पूर्व्वमुक्तम् ।

"प्रणवो भूर्भुवःस्वश्च सावित्री च तृतीयिका" ।

इति ॥ ८ ॥

ब्राह्मणं स्नातुमायान्तं पथि गच्छन्ति देवताः ।
पितरस्तत्र गच्छन्ति वायुभूता जलार्थिनः ॥ ९ ॥

ब्राह्मणमिति । देवताः पितरश्च जलार्थिनोभूत्वा वायुभूता-अशरीरिणः सन्तः स्नानं कर्त्तुं सम्यग् गच्छन्तं ब्राह्मणं पथि अनु-गच्छन्ति ॥ ९ ॥

निराशास्ते निवर्त्तन्ते वस्त्रनिष्पीड़ने कृते ।
तस्मान्न पीड़येद्वस्त्रमकृत्वा पितृतर्पणम् ॥ १० ॥

निराशा इति । स्नानवस्त्रस्य निष्पीड़ने कृते ते देवाः पितरश्च निराशाः सन्तो निवर्त्तन्ते प्रतिगच्छन्ति । तस्मात् पित्रादितर्पण-मकृत्वा स्नानवस्त्रं न निष्पीड़येत् । प्राधान्यात् पितृतर्पणमित्यु-क्तम् । देवादितर्पणमपि बोद्धव्यम् । पूर्व्ववचने जलार्थिनां देवानां पितॄणाञ्चानुगमनस्योक्तत्वात् पितृपदं देवानामप्युपलक्षणं वा ॥१०॥

तत्रापि विशेषमाह,—

जलमध्ये तु यः कश्चिद् द्विजातिर्ज्ञानदुर्व्वलः ।
निष्पीड़यति चेद्वस्त्रं स्नानन्तस्य वृथा भवेत् ॥११॥

जलमध्ये इति । यः कश्चित् ज्ञानदुर्व्वलो द्विजातिर्यदि जलमध्ये स्नानवस्त्रं निष्पीड़यति तदा तस्य स्नानं वृथा भवति । तस्मात् स्थले स्नानवस्त्रं निष्पीड़येदित्यभिप्रायः । स्मृत्यन्तरेऽपि ।

"वस्त्रनिष्पीड़ितं तोयं श्राद्धे चोच्छिष्टभोजिनाम् ।
भागधेयं श्रुतिः प्राह तस्मान्निष्पीड़येत् स्थले" ॥

इति । स्नानवस्त्रस्य निष्पीड़नन्तु श्राद्धीयान्नप्रकरवदपसव्येन कर्त्तव्यमित्युक्तं स्मृत्यन्तरे ।

"अन्नप्रकरवत्तस्य अपसव्येन पीड़नम्" ।

इति । अन्नप्रकरवदित्यभिधानादपसव्येनेत्युक्तत्वाच्च दक्षिणामुखे-नैतत् कर्त्तव्यमित्यर्थादुक्तं भवति ॥ ११ ॥

ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते तृप्यन्तु मया दत्तं वस्त्रनिष्पीड़नोदकम् ॥ १२ ॥

ये चास्माकमिति वस्त्रनिष्पीड़नमन्त्रः ॥ १२ ॥

तर्पणे विशेषमाह,—

अन्वारब्धेन सव्येन पाणिना दक्षिणेन च ।
तृप्यतामिति सेक्तव्यं नाम्ना च प्रणवादिना ॥१३॥

अन्वारब्धेनेति। प्रणवादिना नाम्ना, चकारात् गोत्रादिना च। तथाचानुपदमेव वक्ष्यति। वामेन पाणिना अन्वारब्धेन संलग्नेन दक्षिणेन पाणिना, तृप्यतामित्युच्चार्य्य जलं सेक्तव्यम्। वक्तव्यमिति पाठान्तरम्। एतच्च सव्यान्वारब्धदक्षिणपाणिना तर्पणं पात्रकरणकतर्पणे द्रष्टव्यम्। हस्तेन तर्पणे तु अञ्जलिना तर्पणमनुपदमेव वक्ष्यते। तथाच पात्रकरणकतर्पणे वामपाण्यन्वारब्धेन दक्षिणपाणिना पात्रं गृहीत्वा तेन तर्पयेदित्यर्थात् सिध्यति ॥१३॥

आपोदेवगणाः सर्व्वे आपः पितृगणाः स्मृताः ।
तस्मादापोजले देयाः पितॄणां दत्तमक्षयम् ॥ १४ ॥

आपइति। यस्मादापः सर्व्वे देवगणाः सर्व्वे च पितृगणा मुनिभिः स्मृताः, तस्मात् देवगणानां पितृगणानाञ्च तर्पणार्थं जले तर्पणोदकं देयम्। जले दत्तमुदकं पितॄणामक्षयं भवति। पितॄणामित्युपलक्षणम्। देवानामपीतिबोद्धव्यम्। एतच्च जले तर्पणं जलस्थस्य तर्पणपक्षे इत्यनुपदमेव वक्ष्यति ॥ १४ ॥

प्रक्षालितैस्तिलैः कृष्णैस्तर्पयेत्तु पितॄन् सदा।
जलस्थोजलमध्ये तु त्रिस्त्रिरेकन्तु तर्पयेत् ॥ १५ ॥

प्रक्षालितैरिति। प्रक्षालितैः कृष्णतिलैः पितॄन् तर्पयेत्। जलस्थस्तु जलमध्ये तर्पयेत् न स्थलस्थः। एकैकं पित्रादिकं त्रिस्त्रिस्तर्पयेत्। प्रत्येकमञ्जलित्रयेण तर्पयेदित्यर्थः।

कृष्णैस्तिलैः पितॄन् तर्पयेदित्यभिधानादन्यैस्तिलैरन्यान् तर्पयेदित्यर्थादुक्तं भवतीति वदन्ति। देवलोऽप्याह।

"शुक्लैस्तु तर्पयेद्देवान् मनुष्यान् शवलैस्तिलैः।
पितॄन् सन्तर्पयेत् कृष्णैस्तर्पयेत् सर्व्वथा द्विजः" ॥

इति। छन्दोगपरिशिष्टे तु,

"यवाद्भिस्तर्पयेद्देवान् सतिलाद्भिः पितॄनपि।"

इति देवतर्पणं यवोदकेन कर्त्तव्यमित्युक्तम्। यद्यपि तदपि तदुक्तप्रधानतर्पणविषयम्, तथापि स्नानसूत्रोपदिष्टस्य यवोपकल्पनस्यार्थवत्त्वोपपत्त्यर्थं प्रधानतर्पणे छन्दोगपरिशिष्टानुशिष्टं यवाद्भिर्देवानां तर्पणं स्नानाङ्गतर्पणेऽप्यादर्त्तुमुचितमिति प्रतिपद्यामहे। शिष्टसमाचारश्चैवमनुसृतो भवति। स्मरन्ति च।

"देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः।
पितॄन् भक्त्या तिलैः कृष्णैः स्वसूत्रोक्तविधानतः" ॥

इति। यद्यपि जलस्थोजलमध्ये तर्पयेदित्युक्तम्,

"स्थले स्थित्वा जले यस्तु प्रयच्छेदुदकं नरः।
नोपतिष्ठति तद्वारि पितॄणां तन्निरर्थकम्" ॥

इति स्मृत्यन्तरे स्थलस्थस्य जले तर्पणं निषिद्धञ्च, गोभिलपरिशिष्टान्तरेऽपि,

"नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना ।
नोपतिष्ठति तत्तोयं यन्न भूमौ प्रदीयते" ॥

इति तथैवोक्तं, तथापि स्थलस्याशुचित्वे स्थलस्थस्यापि जले तर्पणमुक्तं स्मृत्यन्तरे ।

"यत्राशुचि स्थलं वा स्यादुदके देवतापितॄन् ।
तर्पयेत्तु यथाकाममप्सु सर्व्वं प्रतिष्ठितम्" ॥

इति । स्थलेऽपि कुशानास्तीर्य्य तर्पणं कर्त्तव्यं न तु केवलायां भूमौ । तदाह हारीतः ।

"वसित्वा वसनं शुक्लं स्थले विस्तीर्णबर्हिषि ।
विधिज्ञस्तर्पणं कुर्य्यान्न पात्रेषु कदाचन ॥
पात्राद्वा जलमादाय शुचौ पात्रान्तरे क्षिपेत् ।
जलपूर्णेऽथवा गर्त्ते न स्थले तु विबर्हिषि ॥
केशभस्मतुषाङ्गारकण्टकास्थिसमाकुलम् ।
भवेन्महीतलं यस्माद्बर्हिषाऽऽस्तरणं ततः" ॥

इति ॥ १५ ॥

**श्राद्धे सेचनकाले तु पाणिनैकेन दापयेत् ।**
**तर्पणे तूभयं कुर्य्यादेष एव विधिः स्मृतः ॥ १६ ॥**

श्राद्धे इति । श्राद्धे ऊर्ज्जं वहन्तीरित्यादिमन्त्रेण यत् पिण्डानां सेचनमुक्तं, तदेकेन पाणिना दद्यात् । तर्पणे तूभयं पाणिं

मिलितं कुर्य्यात्। अञ्जलिना तर्पणं कुर्य्यात् न त्वेकेन पाणिनेत्यर्थः। एष एव विधिः पूर्व्वाचार्य्यैः स्मृतः। न क्रुद्धो नैकपाणिनेति-परिशिष्टान्तरवचनं प्रागेवोदाहृतम्। तथा कार्ष्णाजिनिः।

"श्राद्धे विवाहकाले च पाणिनैकेन दीयते।
तर्पणे तूभयेनैव विधिरेष पुरातनः"॥

इति। यत्तु,

"उभाभ्यामपि हस्ताभ्यामुदकं यः प्रयच्छति।
स मूढ़ो नरकं याति कालसूत्रमनाक्‌शिराः॥"

इति व्याघ्रपादवचनम्. तन्नोभिलीयव्यतिरिक्तविषयम्। श्राद्धादि विषयमिति माधवाचार्य्योक्तं वा समाधानमादरणीयम्। तथाच शिष्टसमाचारः परिपालितो भवति॥ १६॥

**देवतानां पितृणाञ्च जले दद्याज्जलाञ्जलीन्।**
**असंस्कृतप्रमीतानां स्थले दद्याज्जलाञ्जलीन्॥१७॥**

देवतानामिति। अतिरोहितार्थः श्लोकः॥ १७॥

अथेदानीं गोत्रसम्बन्धनाम्नामुल्लेखप्रकारमाह,

**गोत्रं स्वरान्तं सर्व्वत्र गोत्रस्याक्षय्यकर्म्मणि।**
**गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति॥१८॥**

गोत्रमिति। सर्व्वत्र गोत्रशब्दः स्वरान्तः संबुद्ध्यन्तः प्रोक्तो-मुनिभिः। अस्यापवादमाह गोत्रस्येति। अक्षय्योदकदाने गोत्रशब्दः गोत्रस्येत्येवं षष्ठ्यन्ततयोल्लेखनीयः। तर्पणे तु गोत्र-

इत्यसंबुद्धिप्रथमान्ततयोल्लेख्यः। एवं तत्तत्कर्म्मसु तत्तद्रूपेण गोत्रशब्दस्योल्लेखं कर्त्ता न मोहं प्राप्नोति। कर्त्तेति तृजन्तं पदम्। गोत्रस्तु तर्पणे प्रोक्त इति प्रकृतस्नानाङ्गतर्पणविषयं वचनम्। सन्निहिते बुद्धिरन्तरङ्गा इति न्यायात्। प्रकृत-प्रत्ययश्च न्याय्य इति मीमांसाभाष्यकारोक्तेश्च। प्राधानतर्पणे तु कात्यायनेन द्वितीयान्तत्वमुक्तम्। यथा।

"यवाद्भिस्तर्पयेद्देवान् सतिलाद्भिः पितॄनपि।
नामान्ते तर्पयामीति आदावोमिति च ब्रुवन्"॥

इति। अत्र तर्पयामीत्यभिसम्बन्धात् नाम्नोद्वितीयान्तत्वमवगम्यते। गोत्रसम्बन्धपदयोरपि सुतरां तथात्वम्। एवमत्र गोत्रपदमात्राभिधानात् गोभिलीयैर्गोत्रपदमेव वक्तव्यं न तु गोत्र-पर्य्यायं सगोत्रपदम्।

"सकारेणैव कर्त्तव्यं गोत्रं सर्व्वत्र धीमता।
सकारः कुतपो ज्ञेयस्तस्माद् यत्नेन तं वदेत्"॥

इति मत्स्यपुराणवचनं गोभिलीयव्यतिरिक्तविषयम्॥ १८॥

सर्व्वत्रैव पितः प्रोक्तं पिता तर्पण कर्म्मणि।
पितुरक्षय्यकाले च अक्षयां तृप्तिमिच्छता॥ १९॥

सर्व्वत्रैवेति। व्याख्यातप्रायोऽक्षरार्थः। यद्यपि आयन्तु नः पितर इति, एत पितरः इति चोभयथा दर्शनमस्ति, तथापि गोभिलीयैः स्वशास्त्रोपदिष्टं पितरित्यादिकमेव प्रयोज्यं न त्वस्मत्पितरित्यादि। सम्बन्धिशब्दानां पदिन्यायेन स्वसंबन्धि

परत्वाच्च सुकरा यजमानपित्रादिधीः । तदत्र बहुवक्तव्यसद्भावेऽपि ग्रन्थगौरवभयादुपारम्यते । सिद्धान्तस्तूक्त एव ॥ १८ ॥

शर्म्मन्नर्घ्यादिके कार्य्ये शर्म्मा तर्पणकर्म्मणि ।
शर्म्मणोऽक्षय्यकाले च पितॄणां दत्तमक्षयम् ॥२०॥

शर्म्मन्निति । व्याख्यातप्रायोऽक्षरार्थः । उत्तरश्लोकद्वयेऽपि प्रथम-श्लोकवत् कर्त्ता एवं न मुह्यति इति चतुर्थचरणे पाठान्तरम् । अत्र शर्म्मन्नर्घ्यादिके इत्युपसंहारवाक्ये दर्शनात्, गोत्रं स्वरान्तं सर्व्वत्र इति सर्व्वत्रैव पितः प्रोक्तमिति च पूर्व्वोक्तवाक्यद्वयमप्य-र्घ्यादिकार्य्याभिप्रायं बोद्धव्यम् । तथाचार्घ्यादिके कार्य्ये सर्व्वत्रेति तदर्थः । अतएव,

"पितृभ्य इति दत्तेषु उपवेश्य कुशेषु तान् ।
गोत्रनामभिरामन्त्र्य पितॄनर्घ्यं प्रदापयेत्" ॥

इति च्छन्दोगपरिशिष्टे आसनदाने गोत्राद्युल्लेखो नाभिहितः किन्त्वर्घ्यप्रदाने इति सुधीभिरवधेयम् । अत्र शर्म्मन्नित्याद्यभि-धानात् देवशर्म्मन्नित्यादिप्रयोगोऽप्रामाणिकः ॥ २० ॥

ये बान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः ।
ते तृप्तिमखिलां यान्तु ये चास्मत्तोयकाङ्क्षिणः ॥२१॥

ये बान्धवा इति । सोयमवसानाञ्जलिमन्त्रः । पित्रादितर्पणा-नन्तरमनेन मन्त्रेणोदकं दीयते ॥ २१ ॥

अथेदानीमाचमने कञ्चिद्विशेषमाह,—

उदक एवोदकस्थः स्थलगस्तु शुचिः स्थले ।
पादौ कृत्वोभयत्रैव आचम्योभयतः शुचिः ॥२२॥

उदक एवेति। उदके स्थित्वा आचम्य उदक एव शुचिर्भवति, स्थले स्थित्वा आचम्य स्थले शुचिर्भवति। जलस्थ आचम्य जले स्थित्वा यत्कर्म्म क्रियते तत्रैव शुचिर्भवति। न तु स्थलकर्त्तव्यकर्म्मण्यपि। एवं स्थले स्थित्वा आचम्य स्थलकर्त्तव्यकर्म्मण्येव शुचिर्भवति न तु जलकर्त्तव्यकर्म्मण्यपीत्यर्थः। उभयत्र जले स्थले च पादौ कृत्वा आचम्य उभयतः जलस्थलयोः कर्त्तव्ये कर्म्मणि शुचिर्भवति। तथाच पैठिनसिः। "अन्तरुदके आचान्तोऽन्तरेव शुद्धो भवति वहिरुदके आचान्तो वहिरेव शुद्धो भवति तस्मादन्तरेकं वहिरेकं च पादं कृत्वाऽऽचामेत् सर्व्वत्र शुद्धो भवति" इति ॥ २२ ॥

कण्ठाधः प्रविशन्त्यापस्तावत् पूतो भविष्यति ।
अन्यथा न भवेत् शौचं मुक्तकच्छश्च नाचमेत् ॥ २३ ॥

कण्ठाध इति। याभिरद्भिराचमनं क्रियते, ता आपः कण्ठस्याधःप्रदेशं हृदयं प्रविशन्ति चेत्, ततः पूतो भवति। अन्यथा अपां कण्ठाधः प्रवेशाभावे शौचं न भवतीति ब्राह्मणाभिप्रायं वचनम्। मुक्तकच्छस्तु नाचमनं कुर्य्यात्। नाचमेदिति च्छान्दसं ह्रस्वत्वम्। मनुः।

"हृद्गाभिः पूयते विप्रः कण्ठगाभिश्च भूमिपः।
वैश्योऽद्भिः प्राशिताभिश्च शूद्रः स्पृष्टाभिरन्ततः" ॥

इति। तथा व्यासः।

"शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्" ॥

इति ॥ २३ ॥

पवित्रं न भवेत् त्याज्यमाचान्तेन कदाचन।
उच्चारे भोजनस्यान्ते तस्य त्यागो विधीयते ॥ २४ ॥

पवित्रमिति। सपवित्रेण हस्तेनाचमनं वक्ष्यति। येन पवित्रेणाचमनं कृतं, आचान्तेन पुरुषेण तत् पवित्रं त्याज्यं न भवति। स्मरन्ति च।

"सपवित्रेण हस्तेन कुर्य्यादाचमनक्रियाम्।
नोच्छिष्टं तत् पवित्रन्तु भुक्तोच्छिष्टन्तु वर्ज्जयेत्" ॥

इति। उच्चारे पुरीषोत्सर्गे भोजनस्यान्ते च तस्य पवित्रस्य त्यागो-विधीयते। उच्चारे इति मूत्रोत्सर्गस्याप्युपलक्षणम्। छन्दोगपरिशिष्टे।

"पिण्डार्थं ये स्तृता दर्भास्तर्पणार्थं तथैवच।
धृतैः कृते च विण्मूत्रे त्यागस्तेषां विधीयते" ॥

इति। विशेषमाह लघुहारीतः।

"पिण्डार्थं ये स्तृता दर्भा यैः कृतं पितृतर्पणम्।
मूत्रोच्छिष्टैर्धृता ये च तेषां त्यागो विधीयते ॥

नीवीमध्ये च ये दर्भा ब्रह्मसूत्रे च ये धृताः ।
पवित्रांस्तान् विजानीयाद् यथा कायस्तथा कुशाः" ॥

इति। एवञ्च विण्मूत्रोत्सर्गकाले यदि कुशानीवीमध्ये कृता-ब्रह्मसूत्रे वा धृतास्तदा तेषां न त्याज्यतेत्युक्तं भवति ॥ २४ ॥

जानुभ्यामूर्द्ध्वमाचम्य जले तिष्ठन् न दुष्यति ।
ताभ्यामधस्तथा तिष्ठन् नाचामेत विचक्षणः ॥२५॥

जानुभ्यामिति। जानुभ्यामूर्द्ध्वमिति स्थितिक्रियाविशेषणम्। जानुभ्यामूर्द्ध्वं जले तिष्ठन् दण्डवदूर्द्ध्वः स्थित्वा आचम्य न दोषभाग् भवति। जानुभ्यामधस्तु जले दण्डवदूर्द्ध्वस्तिष्ठन् नाचामेत्। किन्तूपविष्ट एव ॥ २५ ॥

वामहस्तकृतैर्दर्भैर्दक्षिणेनोदकं पिबेत् ।
रुधिरं तद्भवेत् तोयं पीत्वा चान्द्रायणं चरेत् ॥२६॥

वामहस्तकृतैर्दर्भैरितीत्थम्भावलक्षणे तृतीया। वामहस्ते कुशान् धृत्वा कुशरहितेन दक्षिणहस्तेन यद्याचमनार्थमुदकं पिबति, तदा तदुदकं रुधिरतुल्यं भवेत्। तदुदकं पीत्वा चान्द्रायणं कुर्य्यात्। आचमनार्थमिति कुतो ज्ञायते ? प्रकरणात्। सन्दंश-पठितत्वाच्च ॥ २६ ॥

दक्षिणेन कुशान् गृह्य दक्षिणेनोदकं पिबेत् ।
सोमपानेन तत्तुल्यं यथा पाणिस्तथा कुशाः ॥ २७ ॥

दक्षिणेनेति। तदुदकपानं सोमपानेन तुल्यम्। यथा पाणिस्तथा

कुशा इत्यनेन कुशानां त्याज्यता नास्तीत्युक्तं भवति । अतिरोहितार्थमन्यत् ॥ २७ ॥

सपवित्रेण हस्तेन ब्राह्मणा आचमन्ति ये ।
सोमपानं भवेत्तेषामन्नञ्च क्रतुमादिशेत् ॥ २८ ॥

सपवित्रेणेति । सपवित्रेण हस्तेन यदाचमनार्थमुदकपानं, तत्सोमपानसमम् । अन्नञ्च क्रतुमादिशेत्, सपवित्रेण हस्तेन यदन्नभोजनं तदपि क्रतुशेषभोजनतुल्यमित्यर्थः । अथवा, तथाविधान्नभोजनेनैव क्रतुफलं लभते इत्यर्थः । तथाच गोभिलपरिशिष्टे ।

"उभयत्र स्थितैर्दर्भैः समाचामति यो द्विजः ।
सोमपानफलं तस्य भुक्त्वा यज्ञफलं भवेत्" ॥

इति ॥ २८ ॥

कुशापूतं भवेत् स्नानं कुशेनोपस्पृशेद् द्विजः ।
कुशेन चोद्धृतं तोयं सोमपानेन तत्समम् ॥ २९ ॥

कुशापूतमिति । निगदव्याख्यातः श्लोकः ॥ २९ ॥

व्यतिरेके निन्दामाह,—

अकुशेन तु यत् स्नानं यद्दानं तोयवर्ज्जितम् ।
असंख्यया च यज्जप्तं तत् सर्व्वं निष्फलं भवेत् ॥३०॥

अकुशेनेति । दानजपयोरभिधानं प्रसङ्गागतम् ॥ ३० ॥

अपपवित्रकैर्हस्तैर्दत्तं भुक्तं हुतञ्च यत् ।
देवा हव्यं न गृह्णन्ति कव्यञ्च पितरस्तथा ॥ ३१ ॥

अपेति । अपगतं पवित्रं येभ्यस्तैरित्यर्थः । निगदव्याख्यातमन्यत् । अत्र च पवित्रशब्दो कुशजातिवचनः । अतएव तत्र तत्र दर्भकुश-शब्दोपादानं कृतम् । न तु

"अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" ॥

इति च्छन्दोगपरिशिष्टसङ्केतितविशिष्टद्विदलपरम् । दक्षिणेन कुशान् गृह्य इति कुशेनोपस्पृशेदिति चैवमादिनिर्देशात् । अतएव च्छन्दोगपरिशिष्टम् ।

"सव्ये पाणौ कुशान् कृत्वा कुर्य्यादाचमनक्रियाम् ।
ह्रस्वाः प्रचरणीयाः स्युः कुशा दीर्घाश्च वर्हिषः ॥
दर्भाः पवित्रमित्युक्तमतः सन्ध्यादिकर्म्मणि ।
सव्यः सोपग्रहः कार्य्यो दक्षिणः सपवित्रकः" ॥

इति सन्ध्यादिकर्म्मसु निर्विशेषिता दर्भाः पवित्रमित्याह ॥ ३१ ॥

**चितिजातं पथिजातं यैः कृतं पितृतर्पणम् ।**
**स्तरणासनपिण्डेषु षट्कुशान् परिवर्जयेत् ॥ ३२ ॥**

चितिजातमिति । यैः कुशैरास्तरणं कृतं, ये कुशाः पित्रादीना-मासने दत्ताः "स्वधानियनीयान् दर्भान् सपवित्रानास्तीर्य्य" इति "स्वधानिनयनीये धारां दद्यात्" इति च श्राद्धकल्पोक्तेः

"पवित्रान्तर्हितान् पिण्डान् सिञ्चेदुशनपात्रकृत्" ।

इति च्छन्दोगपरिशिष्टोक्तेश्च ये स्वधानिनयनीयाः कुशाः पिण्डेषु

दीयन्ते, तानित्यर्थः। ऋज्वन्यत्। षट्कुशानितिप्रदर्शनार्थं न तु वर्ज्जनीयानां कुशानां षट्संख्या विवक्षिता।

"उच्चारे भोजनस्यान्ते तस्य त्यागो विधीयते"।

इति परिगणितव्यतिरिक्तानामपि कुशानां त्यागस्य पूर्व्वमभिहितत्वात्। तथा हारीतः।

"चितौ दर्भाः पथि दर्भाः ये दर्भा यज्ञभूमिषु।
स्तरणासनपिण्डेषु षट्कुशान् परिवर्ज्जयेत्॥
ब्रह्मयज्ञेषु ये दर्भाः ये दर्भाः पितृतर्पणे।
हता मूत्रपुरीषाभ्यां तेषां त्यागो विधीयते॥
अपूता गर्हिता दर्भा ये संछिन्ना नखैस्तथा।
क्वथितानग्निदग्धांश्च कुशान् यत्नेन वर्ज्जयेत्"॥

इति षण्णां कुशानां वर्जनमभिधायान्येषामपि वर्ज्जनमाह। अत्र च तेषु तेषु कर्म्मसु विनियुक्तानां कुशानां वर्ज्जनोपदेशेन तदितरत्र विनियुक्तानामपि पुनरन्यत्र विनियोगः प्रतीयते। तथाच गृह्यपरिशिष्टम्।

"दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणाहविरग्नयः।
अयातयामान्येतानि नियोज्यानि पुनः पुनः॥"

इति। विशेषमाह मरीचिः।

"मासे नभस्यमावास्या तस्यां दर्भचयो मतः।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः॥"

इति। विद्याकरवाजपेयिधृतम्।

"संग्रहाद्वत्सरं यावत् शुद्धिः स्यादिश्ववर्हिषाम् ।
अतः परं न गृह्णीयाज्जपादौ यज्ञकर्म्मणि ॥"

इति ॥ ३२ ॥

जलमध्ये श्मशाने वा वल्मीके मुषिकोत्करे ।
कृतशौचञ्च यच्छेषमग्राह्याः पञ्च मृत्तिकाः ॥३३॥

जलमध्ये इति । अन्तर्जलमृत्तिका श्मशानमृत्तिका वल्मीकमृत्तिका मुषिकोत्खातमृत्तिका शौचावशिष्टमृत्तिका चेति-पञ्च मृत्तिका न ग्रहणीयाः। कृतशौचञ्च यच्छेषमिति सामान्योपक्रमाभिप्रायेण नपुंसकनिर्देशः । शक्यं श्वमांसादिभिरपि क्षुत्-प्रतिहन्तुमित्यादौ यद्वत् । छान्दसो वा व्यत्ययः । "मृत्तिलकुशगोमयाक्षतानुपकल्प्य" इति स्नानसूत्रे यन्मृत्तिकोपकल्पनमुक्तं सैव मृदनेन विशेषितेति बोद्धव्यम् ॥ ३३ ॥

न कुर्य्याद्दन्तसंहर्षमालूनं देहभाजनम् ।
अपमृज्य च न स्नायाद्गात्रमम्बरपाणिना ॥ ३४ ॥

न कुर्य्यादिति । देहश्च भाजनञ्चेति देहभाजनमिति द्वन्द्वैकवद्भावः । तदालूनं नखादिना उल्लिखितं न कुर्य्यात् । वस्त्रेण पाणिना वा शरीरं मार्ज्जयित्वा न स्नायात् । स्नानकाले वस्त्रेण पाणिना वा गात्रं न मार्ज्जयेदित्यर्थः । ऋज्वन्यत् ॥ ३४ ॥

स्नातोगात्राणि संमृज्यात् स्नानशाट्या न पाणिना ।
न च निर्धूनयेत् केशानाचामेत्त्वेव चोत्थितः ॥ ३५ ॥

स्नातइति । स्नातः सन् स्नानशाट्या पाणिना च गात्राणि न

संमृज्यात्। न च केशान् कम्पयेत्। स्नातोत्थितस्त्ववश्यमाचामेत्॥ ३५॥

दुःस्वप्नं यदि वा पश्येत् वान्ते वा क्षुरकर्म्माणि।
मैथुने कटधूमे च स्नानमेव विधीयते॥ ३६॥

दुःस्वप्नमिति। कटधूमः चिताधूमः। स्मरन्ति च। "चिताधूमस्पर्शने सर्व्वे वर्णाः स्नानमाचरेयुः" इति। निगदव्याख्यातमन्यत्॥ ३६॥

द्विजोऽयं स्नाति नित्यं यः पञ्चाङ्गं विधिपूर्व्वकम्।
अश्वमेधफलं तस्य गोभिलीयवचो यथा॥ ३७॥

द्विज इति। पञ्चाङ्गं विधिपूर्व्वकमिति क्रियाविशेषणम्। योऽयं द्विज इति संबन्धः। पञ्चाङ्गं "मृत्तिलकुशगोमयाक्षतानुपकल्पय" इति स्नानसूत्रोक्तैः पञ्चभिरङ्गैरुपेतम्। तिलाक्षतयोः स्नानाङ्गतर्पणे विनियोगेऽपि प्रणाल्या स्नानाङ्गत्वमवगन्तव्यम्। मृद्गोमयकुशमन्त्रतर्पणरूपैः पञ्चभिरङ्गैरुपेतं वा। अतिरोहितार्थमन्यत्॥ ३७॥

मन्त्राः—पावकानइत्यादि, सप्तव्याहृतयः, सावित्री च सप्रणवाऽऽद्यन्ते, सहस्रशीर्षेत्यादि, घृतवतीत्यादि, अश्वक्रान्तेत्यादि, इदं विष्णुरित्यादि, त्रीणि पदेत्यादि, विष्णोः कर्म्माणीत्यादि, तद्विप्रास इत्यादि, अतोदेवा इत्यादि, उद्वयमित्यादि, उदुत्तममित्यादि, मृत्तिके ब्रह्मदत्तेत्यादि, अमोसीत्यादि, गावश्चिदित्यादि, ऋतञ्चेत्यादि, शंनोदेवीत्यादि, आपोहिष्ठेत्यादि, तरत्स-

